हते तु वीरे प्लवगाधिपे तदा
प्लवंगमास्तत्र न शर्म लेभिरे ।
वनेचराः सिंहयुते महावने
यथा हि गावो निहते गवां पतौ ॥ २५

ततस्तु तारा व्यसनार्णवप्लुता
मृतस्य भर्तुर्वदनं समीक्ष्य सा ।
जगाम भूमिं परिरभ्य वालिनं
महाद्रुमं छिन्नमिवाश्रिता लता ॥ २६

G 4 21 38
B 4 22 31
L 4 16 124

इति श्रीरामायणे किष्किन्धाकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

पुष्पौघेणानुबध्यन्ते करिष्यति तदद्य क ।
येन दत्त महद्युद्ध गन्धर्वस्य महात्मन ।
गोलभस्य महाबाहोर्दश वर्षाणि पञ्च च ।
नैव रात्रौ न दिवसे तद्युद्धमुपशाम्यति ।
ततस्तु षोडशे वर्षे गोलभो विनिपातित ।
त हत्वा दुर्विनीत तु वाली दष्ट्राकरालवान् ।
सर्वाभयकरोऽस्माकं कथमेष निपातित ।

[ (l 1) T2 शोकाद् ( for तत्र ) D5 6 T2 G2 M1 2 Cg हरि-, Ck t as above ( for हत- ) —(l 2) D5 8–10 प्लवगसत्तमा ❀ Ck t परिदेवयमाना विचुक्रुशुरित्यन्वय ❀—(l 3) D6 [ अ ]पि ( for हि ) D5 8–10 च, T1 3 M3 [ आ ]सीत् ( for न ) D5 6 8–10 वानरेश्वरे ( for °राधिपे ) —(l 5) T3 प्लवगशार्दूले —D8–10 om. l 6–7 —(l 6) M1 वीर्येण and च पर्वता ( for वेगेन and वनानि च respy ) —(l 7) D5 6 G1 पुष्पोघेन, Cr g पुष्पौघेण ( as above ) —(l 9) T2 गोलभ्यस्य, Cr.t as above ( for °भस्य ) —(l 11) D5–10 षोडशमे ( for तु षोडशे ) D10 गोलभी —(l 12) M3 हत्वा त ( by transp ) D5 दष्ट्रि- ( for दष्ट्रा- ) ❀ Cv दष्ट्राकरालवान् दष्ट्रया करालो गुणो दष्ट्राकराल तद्वान् कराल दष्ट्र(ष्ट्रा)वान् वा ।, Cr दष्ट्राकरालवान् भावप्रधानो निर्देश । दष्ट्राभ्या करालवान् । दष्ट्रया करालो गुणो दष्ट्राकराल । तद्वान् । दष्ट्राकरालवान्वा ।, Cm दष्ट्राकरालवान् करालदष्ट्रावानित्यर्थ ।, Cg दष्ट्राकरालवान् । करालदष्ट्रावान् । परनिपात ।, Ck दष्ट्राकरालवान् । स्वार्थे मतुप् । दष्ट्राकराल इत्यर्थ ।, Ct दष्ट्राकरालवान् आर्ष । स्वार्थे मतुप् । दष्ट्राकराल इत्यर्थ ❀—(l 13) D6 8–10 G1 -[ अ ]भयकरो T1 3 एको ( for एष ) ]

25 G( ed ) om 25 —[a] ) Ś1 D12 प्रवीरे, Ñ1 वीरे, G1 तु वीर- ( for तु वीरे ) —[b] ) Ś1 Ñ V B D1–4 7 12 13 महात्मना तत्र( Ś1 Ñ1 D12 °नस्तत्र [sic]), D8–10 वनचरास्तत्र, D11 महानुभावेन ( for प्लवगमास्तत्र ) D4 illeg from तत्र up to रे —[c] ) Ñ2 V B D3 7 11 वनौकस ( for °नेचरा ) V1 सिंहपुतौ ( corrupt ), V2 3 B4 सिंहपुरे —[d] ) Ś1 Ñ1 D1–3 11–13 ह( D3 11 हृ )तर्षभा गाव इवाकुला( Ñ1 इवाकुलस )-कुला ( D3 11 °च प्रतस्थिरे ), Ñ2 V B D7 मृगारिणा गाव इवर्षभे हते, D4 हतर्षभा गा इव आकुलाकुला ( sic )

26 [a] ) Ś1 reads तु in marg D1 व्यसनार्णवे T2 3 G2 3 M2 3 -[ आ ]प्लुता ( for -प्लुता ) —[b] ) Ñ2 V B D7 निरीक्षमाणा ( for मृतस्य भर्तुर् ) D2 13 T1 3 M3 व्यसन ( for वदन ) Ś1 D2 4 12 13 निरीक्ष( Ś1 D13 °क्ष्य )ती, Ñ1 D11 निरीक्ष्य, Ñ2 V D7 प्रियस्य, B प्रियस्य चै( B2 सा ), D1 3 निरीक्ष्य त( D3 सा ), D5 6 T2 G1 2 M2 समाश्रिता, G3 M1 समीक्ष( G3 °क्ष्य )ती ❀ Ck t समीक्ष्य सेति पाठ ❀—[c] ) Ś1 पपात भूमौ, Ñ V B D1–4 7 11–13 विवेश भूमौ ( for जगाम भूमि ) Ñ1 D1 परिवार्य, Ñ2 V3 D7 परिगृह्य —[d] ) B1 3 M3 भिन्नम् ( for छिन्नम् ) B2 महाद्रुमाच्छिन्नम् D10 श्रिता ( for [ आ ]श्रिता ) D1 महाद्रुमं चैत्यमिवाश्रिता श्रिया ( sic )

Colophon —*Sarga name* Ś1 D12 वालिसंक्रामण, Ñ1 अगदपरिदेवन, Ñ2 D7 वालिप्राणत्याग , V B1–3 D1 वालिप्राणोत्क्रम ( D1 °त्क्रान्ति ), B4 D2 13 वालिवध , D3 अगदानुशासन , D4 वालिसंग्राममरण, D11 अगदशासन —*Sarga no* ( figures, words or both ) Ś1 Ñ1 V1 B1–3 D2 4 12 om , Ñ2 V2 G3 G( ed ) 21, V3 24, B4 D5–10 T G1 2 M 22 ( as in text ), D1 14, D3 23, D11 19, D13 20, L( ed ) 16 —After colophon, G concludes with श्रीरामाय नम

# २३

ततः समुपजिघ्रन्ती कपिराजस्य तन्मुखम् ।
पतिं लोकाच्च्युतं तारा मृतं वचनमब्रवीत् ॥ १
शेषे त्वं विषमे दुःखमकृत्वा वचनं मम ।
उपलोपचिते वीर सुदुःखे वसुधातले ॥ २
मत्तः प्रियतरा नूनं वानरेन्द्र मही तव ।
शेषे हि तां परिष्वज्य मां च न प्रतिभाषसे ॥ ३
सुग्रीव एव विक्रान्तो वीर साहसिक प्रिय ।
ऋक्षवानरमुख्यास्त्वां वलिनं पर्युपासते ॥ ४

## 23

M1 begins with श्रीरामाय नम

1 [b]) Ñ2 V B D7 कपिराजमथो (B3 °जर )सुखी —[c]) Ñ2 V1 3 B1–3 D8 9 Ck t लोकच्च्यु (D8 9 Ck t °श्रु )ता, D6–7 G2 M1 3 लोकच्युत, Cr m g as in text (for लोकाच्युत) Ś1 Ñ1 V2 B4 D2 4 10–13 पतिलोक (Ś1 Ñ1 D2 11–13 °काच् )च्यु (D10 °श्रु )ता तारा, D3 ह्यन्यथा पतिता तारा —[d]) Ś1 Ñ1 D4 12 पतित पतिम्, Ñ2 V B D1–3 7 11 13 पति वचन (D1 2 13 पतित )म् (for मृत वचनम्)

2 D5 reads 2–3[b] twice —[a]) Ñ1 V1 B2 व्यसने (B2 °न), B1 3 °म, D2 °म (for विषमे) D12 त्वविषमे Ś1 Ñ1 D1 3 4 12 कृच्छ्रे, D2 13 श्रेष्ठ (with hiatus) (for दुःखम्) ❀ Cr g दुःखमित्येतत्क्रियाविशेषणम् ❀ V3 प्राप्तस्त्व व्यसन दुःखम् —[b]) Ś1 Ñ1 D12 सुकृ वा (for अ°) Ś1 D12 विषम (for वचन) —[d]) G3 सुदुःख- (for °खे) ❀ Cv सुदुःखे वसुधातले इति सम्यक्।, Cr m g सुदुःखे सुतरा दुःखकरे ❀ —For 2[cd], Ś1 Ñ V B D1 2 4 7 (marg ) 12 13 subst

466* क्षावृणोपि मम प्राणानद्वितीयो रणे हत ।

[ Ś1 D12 आवृणोति Ś1 Ñ1 D12 सम (for मम) Ñ2 V B D7 प्रियान् (V1 3 °य) हित्वा तथा (V2 यथा, B1 तत ) प्राणान् (for the prior half) Ś1 अद्वितीये (for °यो) D4 हरे (for रणे) Ñ2 V2 B D7 त्रिसिर्हत, V1 मे दिव गत (hypm), V3 दिव गत (for रणे हत ) ]

3 D7 reads 3[ab] in marg —[b]) D6 9 -तले (for तव) —[c]) D2 13 संवसे (D13 °ते), D3 शेते हि (for शेषे हि) Ś1 Ñ V B D1 3 4 7 11 12 [ए]ना (for ता) —[d]) D6 तु (for च) G(cd) transp च and न D4 (marg) -मन्यसे, D13 °ते (for -भाषसे) Ñ2 V2 3 B1 3 4 D7 मा च कि न प्रभाषसे —After 3, D3 ins

467* सुग्रीवभयविक्रान्ता वीर साहसमास्थिता ।,

whereas D6 8–10 S ins .

468* सुग्रीवस्य वश प्राप्तो विधिरेष भवत्यहो ।

4 D3 transp [ab] and [cd] —[a]) Ñ1 illeg, D6 एष (for एव) Ś1 Ñ V B D3 7 12 श्रीमन्मन्नाथ (Ś1 Ñ1 D3 12 °न्मे नाथ, B2 °न्नाथ सु ) विक्रात (Ñ2 °ते), D1 °वयशमाक्रात, D2 4 13 श्रीमत नाथ विक्रात, D11 °वभयविक्राता —[b]) Ñ2 V B D7 सर्वं, G3 धीर (for वीर) D6 प्रिय (for प्रिय) Ñ1 D1 11 साहसमास्थित (Ñ1 °त), D2,4 13 °क प्रिय, D9 वाक्यं ‹ प्रिय (for साहसिक प्रिय) —[c]) D1–3 11 13 ऋष्य- (for ऋक्ष-) T1 3 त (for त्वा) —[d]) Ś1 Ñ V B D1 2 4 7 12 13 बहव', D3 11 वलिन, M1 राजान (for वलिन) Ñ2 D7 समुपासते, V2 पर्युदासते ❀ Ck पर्युपासत इति। उपासिष्यत इति यावत्।, Ct पर्युपासते पर्युपासन्त ❀ —After 4, D7 ins l 8–13 of 465* and then cont, while Ś1 Ñ2 V B D2 4 11–13 ins after 4, whereas Ñ1 D1 3 ins after 5[ab]

469* रणामर्पण विक्रान्त प्रदीप्त प्लवता वर।
(4 20 4) किमेतदद्य त्व वीर पुरोगानाभिनन्दसि।
नन्दयन्सुहृद सर्वान्सामदानपरिग्रहै ।
य पुरा बुध्यसे राजन्सोऽद्य नैव विबुध्यसे।
पुत्रोऽयमङ्गदो बालो भृत्यामात्यास्तथैव च। [5]

[ Ñ1 illeg from l 1 up to the prior half of l 5. D1 om l 1–4 —(l 1) Ś1 D12 रणमर्पण, D3 11 °मर्पित (for रणामर्पण) B4 रणामर्पपरिक्रात (for the prior half) V1 प्रदीप (for °प्त) V1 B1 3 तपता वर, V2 3 कनकावर, B2 पतता वर, B4 कामकावर (for प्लवता वर) Ś1 D4 12 शूर व्रतवता वर, D2 13 प्रतीतमतिरातत, D3 11 प्रतीत पतितो वर (for the post half) —(l 2) V2 B2 4 ते (for त्व) Ś1 D3 4 11 12 किमगदपुरोगा मा (D3 11 °गाणा), V3 किमेतादु खितान्वीर, D2 13 किमगद पुरो भ्रात (for the prior half). V2 3 B2 4 -भाषसे (for -नन्दसि) Ś1 D2–4 11–13 नाथ वीराभिनदसि (D3 °से, D11 °मन्यमे) (for the post half) —(l 3) D2 माधुवाद- (for सामदान) —(l 4) D11 त्व (for य) Ñ2 V B1 3 4 D7 काले, B2 क्रात (for राजन्) Ñ2 V B1 3 4 D7 कि त्व (V1 2 B1 3 तु, B4 नु), D13 चैव (for नैव) Ñ2 V B1 3 4 D7 न (for वि-) Ś1 D12 विबोधसे, D2–4 11 13 [अ]व (D2 [अ]घ )बुध्यसे (for विबुध्य°) —After l. 4, V3 ins 470* —Ñ2 V1 2 D3 om l 5 —(l 5) D13 -भृत्यास (for -[अ]मात्यास). Ñ1 वालो भृत्यास् (for भृत्यामात्यास्) D2 [ऽ]मात्या भृत्यास्तथैव च (for the post half) ]

एषां विलपितं कृच्छ्रमङ्गदस्य च शोचतः ।
मम चेमां गिरं श्रुत्वा किं त्वं न प्रतिबुध्यसे ॥ ५
इदं तच्छूरशयनं यत्र शेषे हतो युधि ।
शायिता निहता यत्र त्वयैव रिपवः पुरा ॥ ६
विशुद्धसत्त्वाभिजन प्रिययुद्ध मम प्रिय ।
मामनाथां विहायैकां गतस्त्वमसि मानद ॥ ७
शूराय न प्रदातव्या कन्या खलु विपश्चिता ।
शूरभार्यां हतां पश्य सद्यो मां विधवां कृताम् ॥ ८
अवभग्नश्च मे मानो भग्ना मे शाश्वती गतिः ।
अगाधे च निमग्नास्मि विपुले शोकसागरे ॥ ९
अश्मसारमयं नूनमिदं मे हृदयं दृढम् ।
भर्तारं निहतं दृष्ट्वा यन्नाद्य शतधा गतम् ॥ १०
सुहृच्चैव हि भर्ता च प्रकृत्या च मम प्रियः ।
आहवे च पराक्रान्तः शूरः पञ्चत्वमागतः ॥ ११ G. 4 22 16 B 4 23 12 L 4 17 16

5 [a]) Ś1 Ñ1 V3 D2 4 5 8–10 12 13 T तेषां Ś1 Ñ2 V1 2 B D1–4 7 11–13 विलपता, Ñ1 प्रलपता (for विल°) B1 3 कृत्स्नम् (for कृच्छ्रम्) —[b]) G3 [अ]भि, M1 [अ]पि (for च) Ś1 D1 2 4 12 13 वधूना सुहृदामपि, Ñ1 . . जनामपि (illeg), Ñ2 V B D7 क्रोशतश्चाङ्गदस्य च, D3 अङ्गदश्च सुतो बली —After 5[ab], Ñ1 D1 3 ins 469* V3 om 5[cd] —[c]) D5 8–10 [इ]मां गिरं (for [इ]मां गिरं) Ś1 Ñ V B D1–4 7 11–13 ममार्ये(Ś1 Ñ1 D12 °य, B4 °र्यै, D3 °द्य) विलपन्त्याश्च —[d]) G3 च (for त्व) Ś1 Ñ V1 2 B D1–4 7 11–13 शयान किं न(V2 तु) (for किं त्वं न प्रति-) V2 * से, M1 -भाषसे (for बुध्यसे) —After 5, Ś1 Ñ2 V1 2 B D2–4 7 12 13 ins, while V3 ins after l 4 of 469*

470* पश्येममङ्गद वीर तीव्रशोकमवस्थितम् ।
कृताञ्जलिमुपासीनं किमेनं नाभिभाषसे ।

[(l 1) V1 D4 [ए]नम् (for [इ]मम्) Ś1 D2–4 12 13 अधोमुखम् (for तीव्रशोकम्) —Ś1 D2–4 12 13 om l 2 —(l 2) V3 [अ]ति- (for [अ]भि-) ]

6 [a]) V2 3 तु (for तच्) Ś1 Ñ1 D12 शर-, V2 3 D8–10 G3 M3 Cr m g t वीर-, Ck as in text (for शूर-) —[b]) Ś1 Ñ1 D1 4 12 13 शेषे यत्र (by transp), B1 3 यत्तु शेषे, D2 शये तत्र, G1 Ct तत्र शेषे, M3 °ते, Cr g as in text (for यत्र शेषे) —[d]) G1 निहत (sic) (for रिपव) —For 6[cd], Ś1 Ñ V B D1–4 7 11–13 subst

471* समीपे मन्दभाग्याया कथितं यत्त्वया मम ।

[(l 1) Ś1 Ñ1 D1 4 12 स्वल्पभाग्याया, D2 13 सुल्मे येयं (for मन्दभाग्याया) Ñ2 V2 3 B1 3 4 D7 हि, D4 तत् (for यत्) D2 3 11 13 transp कथितं and यत्त्वया D4 क्षम (for मम) ]

—Thereafter Ś1 Ñ2 V B D2 4 7 11–13 read 4 20 5–6

7 [a]) Ñ2 V B3 4 D7 सत्त्वविज्ञान, D2 13 -सत्त्वोपि जन (for -सत्त्वाभिजन) B1 2 विशुद्ध(B2 °स्तब्ध) सत्त्वविज्ञान —[b]) Ś1 Ñ V1 B D1–4 7 11–13 -काम(Ñ1 D2 13 °मो), V2 3 -कात (for युद्ध) V2 मल (sic) (for मम) D13 प्रिय (for °य) D5 corrupt (for मम प्रिय) —After 7[ab], D9 (marg sec m sic) ins

472* श्रेणीजित राजर्षे गन्धर्वकन्या विवाहिता ।
किंनरेण कृत युद्धं तत एव हृत गिरम् ।

—[c]) B1 3 [ए]क्ते, D1 त्व (for [ए]का) —[d]) Ñ2 V B D3 7 11 खलु (for त्वम्) Ś1 Ñ1 D1 2 4 12 13 कथं संप्रति गच्छसि(D13 °ति)

8 [a]) Ñ2 V B D7 transp शूराय and न —[b]) D10 lacuna for कन्या Ś1 Ñ1 D1 2 4 12 13 किल (for खलु) —[c]) Ś1 Ñ2 V B D2 4 7 12 13 हि मा (for हतां) —[d]) D1 यथाह (for सद्यो मा) D1 विधवी- (for °वा) Ś1 Ñ2 V B D2 4 7 12 13 सद्यो वैधव्यमागता

9 [a]) Ñ2 V2 3 B1 3 4 D7 आर्य, B2 D3 11 अद्य, D1 अवि, D2 अय (for अव) —[b]) Ñ2 V B D7 गतिर्भग्ना च शाश्वती ❀ Cr m गम्यत इति गतिरिति व्युत्पत्त्या (Cr गतिशब्देनात्र) प्राप्यभूतपतिशुश्रूषोच्यते।, Cg गति पतिशुश्रूषेत्यर्थ । यद्वा गम्यत इति गति सुखमित्यर्थ ।, Ck t शाश्वती स्थिरा गति सुखप्राप्ति ❀ —[c]) G3 तु (for च) Ñ2 V B D7 आकेशात, G(ed) आकाशाते (for अगाधे च) D1 नि- (for नि-) —Ñ1 wrongly repeats [d] —[d]) Ñ2 V B D7 विवृद्धे (for विपुले) —After 9, D3 reads 4 20 5

10 [a]) Ñ1 वज्रसारमय, B2 3 °मिम (sic) (for अश्मसारमय) Ś1 D1 2 4 12 13 मन्ये (with hiatus) (for नूनम्) —[b]) D3 11 G1 ममेद (for इद मे) B2 नयन (for हृदय) V2 3 हृदय सुदृढ मम —[c]) B1 हि हत, D4 निहित (for निहत) —[d]) D5 8–10 M1 कृत (for गतम्) Ś1 Ñ1 D1 2 4 12 13 शतधा यन्न दीर्यते

11 [a]) Ś1 (sup lin) Ñ V B D1 4 5 7–10 12 G2 च, Cr as in text (for हि) D6 T2 G2 हि (for च) D2 13 स सुहृच्चैव भर्ता च ❀ Cv सुहृच्चैव ह्येत्यादि। पूर्वोक्तस्य हृदयभेदनस्य समर्थनमेतत् ❀ —[b]) Ś1 Ñ1 D12 सुहृत्प्रिय, Ñ2 च मया प्रिय, D1 2 4 13 सुदृढ(D4 °ढ)प्रिय, D7 T1 3 M3 मम च प्रिय (by transp) (for च मम प्रिय) —[c]) B1 3 अदूरे च, D5 8–10 प्रहारे च, T2 °वेषु, G(ed) °वे वि- (for आहवे च) Ñ2 V B D3 7 11 परिक्रा(V3 °श्रा, B1 3 4 °श्रा)न्त (for पराक्रान्त) —[d]) B4 D13 शूर, D1 पति (for शूर) Ś1 D12 शूरत्व च त्वमागत ❀ Ck t पराक्रान्त परेणाक्रान्तोऽभिभूत पञ्चत्वमागत । एतद् (Ck त) दृष्ट्वापि यद्धृदय(Ck हृदय) न भिन्नमतो दृढमिति पूर्वेणान्वय ❀

17 12 17 पतिहीना तु या नारी कामं भवतु पुत्रिणी ।
धनधान्यैः सुपूर्णापि विधवेत्युच्यते बुधैः ॥ १२
स्वगात्रप्रभवे वीर शेषे रुधिरमण्डले ।
कृमिरागपरिस्तोमे त्वमेवं शयने यथा ॥ १३
रेणुशोणितसंवीतं गात्रं तव समन्ततः ।
परिरब्धुं न शक्नोमि भुजाभ्यां प्लवगर्षभ ॥ १४

कृतकृत्योऽद्य सुग्रीवो वैरेऽस्मिन्नतिदारुणे ।
यस्य रामविमुक्तेन हृतमेकेषुणा भयम् ॥ १५
शरेण हृदि लग्नेन गात्रसंस्पर्शने तव ।
वार्यामि त्वां निरीक्षन्ती त्वयि पञ्चत्वमागते ॥ १६
उद्बबर्ह शरं नीलस्तस्य गात्रगतं तदा ।
गिरिगह्वरसंलीनं दीप्तमाशीविषं यथा ॥ १७

---

12 $^a$) Ñ2 V2 B2–4 D1 7 11 हि, V1 B1 D6 च (for तु) —$^b$) Ñ2 V B D4 7 भवति (for °तु) —$^c$) D4 च पूर्णापि, G1 सुसपूर्णा (for सुपूर्णापि) Ś1 Ñ V B D1–3 7 11–13 धनधान्यौघपूर्णा( Ñ2 V B D7 °युक्ता )पि, D5 8–10 धनधान्यसमृद्धापि —$^d$) Ś1 D2 4 12 13 नरं, D3 11 T1 3 M3 जनै (for बुधैः)

13 $^a$) D4 स्वगात्रैर्भूभवे (for स्वगात्रप्र°) Ñ1 रक्ते, D1 [ऽ]रण्ये (for वीर) —$^b$) Ś1 Ñ V B D1–4 7 11–13 G2 रुधिरकर्दमे —D4 om 13$^c$–14$^b$ —$^c$) Ś1 D3 12 कृतराग-, Ñ2 D5 7–10 M1 क्रिमि°, V1 °रोम-, D1 शमिराम- (sic), D11 लाक्षा° (for कृमिराग-) D3 11 -परिक्षिते (for °स्तोमे) —$^d$) Ś1 D3 12 यथा वै, Ñ1 D8–10 स्वकीये, Ñ2 V B D7 यथैव, D1 2 6 13 G1 M1 2 °व, D5 स्ववश, D11 यथा त्व, G2 3 त्व पुरा, M3 °मात्म- (for त्वमेव) V1 शयन (for °ने) Ś1 D2 12 13 तथा, Ñ2 V2 3 B D3 7 11 G2(before corr) पुरा (for यथा) ❀ Cv कृमिरागपरिस्तोमे कृमिरागो लाक्षारञ्जित परिस्तोम कुथ सलाक्षिक परिस्तोमो यस्मिन् शयने तत्र। कृमिराग वदन्त्यार्या लाक्षिक प्रियदर्शनमित्युत्पलमाला।, Cr कृमिरागो लाक्षारञ्जित परिस्तोम कुथो यस्मिन्तत्। कृमिराग वदन्त्यार्या लाक्षिक प्रियदर्शनमित्युत्पलमाला। यद्वा इन्द्रगोपकृमे राग इव रागो यस्य स। कृमिराग। परिस्तोमो यस्मिन्।, Cm कृमिरागो लाक्षारञ्जित परिस्तोम कुथो यस्मिन्तत्तथा। "कृमिराग वदन्त्यार्या लाक्षिक प्रियदर्शनम्" इत्युत्पलमाला। यद्वा कृमे इन्द्रगोपस्य राग इव रागो यस्य स कृमिराग, परिस्तोमो यस्मिन् शयने तत्तथा।, Cg k कृमेरिन्द्रगोपस्य राग इव रागो यस्य स तथा। कृमिराग, परिस्तोम कुथ आस्तरण यस्मिन् तत्तथा।, Ct कृमेरिन्द्रगोपादे राग इव रागो यस्य तादृश परिस्तोम आस्तरण यस्मिन्। कृमिरागो लाक्षाराग 'कृमिराग वदन्त्यार्या लाक्षिक प्रियदर्शनमित्युत्पलमालाकोशादित्यन्ये ❀ —After 13, Ś1 Ñ1 D1 2 4(owing to om after 13$^{ab}$) 12 13 read 16$^{ab}$ —After 13, D3 11 ins

473* चारुपुङ्खेन बाणेन सुपर्णानिलवेगिना।

—Then D3 11 read 16$^{ab}$

14 D3 11 om 14 Ś1 Ñ1 D1 2 4 12 13 om 14$^{ab}$ (for D4, cf v l 13) —$^{ab}$) Ñ2 V B D7 प्रहारैर्विक्षत गात्र रामसायकपीडित —$^c$) Ś1 Ñ1 D1 2 12 13 परिष्वक्तु, V2 °बद्धु, B1 3 °विद्ध, D4 °लब्धु (for °रब्धु) —$^d$) Ñ2 V B D7 बाहुभ्या (for भुजाभ्या) Ś1 Ñ V B D1 2 7 12 13 ते (Ś1 D2 12 त्वा, Ñ1 om, D1 तु, D13 स) हरी( V2 3 कपी)-श्वर (for प्लवगर्षभ) D4 त्वा भुजाभ्या हरीश्वर

15 $^a$) Ś1 Ñ V B D1–4,7 12 13 -कार्यो (for -कृत्यो) B [ऽ]थ (for ऽद्य) —$^b$) Ś1 Ñ1 D3 12 प्रतिभाति मे (D3 ते), Ñ2 V1 B D4 7 11 प्रतिपालि(B4 D4 7,11 °याति)-ते, V2 त्रिभिरुद्धृते, D1 सति दा° (for अतिदारुणे) V3 शरो नोद्ध्रियते कथ (sic), D2 13 वीरे( D13 वने )स्मिन्विनिपातिते —After 15$^{ab}$, Ñ2 V B1 3 D7 ins

474* युष्माभि कपिराजस्य प्राणा यत्सायकैर्हृता ।

[ V2 3 च (for यत्) ]

—Ñ2 V B D7 om 15$^c$–16 —$^c$) D2,13 पश्य, D4 यस्व (for यस्य) Ś1 -नियुक्तेन, G2 -वियु° (for -विमु°). —$^d$) D1 4 9 12 हतम्, D3 कृतम् (for हृतम्) D3 फल, D4 स्वय (for भयम्) —After 15, Ś1 D1–4 11–13 ins

475* एव तु विलपन्त्या वै तारायाश्च समीपत ।

[ D12 च (for तु) D2 13 विलपती and तारा वालि- (for °पन्त्या and तारायाश्च respy) ]

16 Ñ2 V B D7 om 16 (cf v l 15) Ś1 Ñ1 D1 2 12 13 read 16$^{ab}$ after 13, D3 11 read 16$^{ab}$ after 473*, D4 reads 16$^{ab}$ after 13$^{ab}$ —$^{ab}$) Ś1 Ñ1 D1 2 4 12 13 [उ]रसि (for हृदि) Ś1 Ñ1 D1 2 4 12 13 जीवितप्राण(D4 तव जीवित )हारिणा (for $^b$) D3 11 तवोरसि निमग्नेन गात्रमे प्रतिबाध्यते —Ś1 Ñ1 D1–4 11–13 om 16$^{cd}$ —$^c$) G1 2 M2 वारिता त्वा(G2 °स्मि), Cr m g k t as in text (for वार्यामि त्वा) ❀ Cr m g वार्यामि वारितास्मीत्यर्थ (Cm °न्वय)।, Ck वार्यामि निवार्य इति यावत्।, Ct वार्यामि निवारिता भवामीत्यन्वय ❀

17 $^a$) Ñ2 D7 G2(also *int lin sec m*) 3 M1 उज्जहार, V B D1 उद्धार, G1 2 M3 उद्ववाह(M3 °वर्ष) (for उद्बबर्ह). ❀ Cg t उद्बबर्ह उद्धृतवान्।, Ck उद्बबर्ह बृहू उद्यमने। उद्धृतवानित्यर्थ ❀ Ś1 Ñ V B D1–4 7 11–13 ततो (for शरं) V2 रामा (for नीलस्) —$^b$) D9 तथा (for तस्य) Ś1 Ñ V B D1–4 7 11–13 शर तस्य कलेवरात्( Ś1 Ñ1 D1–4 11–13 शरीरत ) —$^{cd}$) Ś1 Ñ1 D1 2 4 12 13 श्वसत गिरिदुर्गस्थ, D3 11 गह्वराद्गिरिराजस्य (for $^c$) D1 2 4

तस्य निष्कृष्यमाणस्य बाणस्य च बभौ द्युतिः ।
अस्तमस्तकसंरुद्धो रश्मिर्दिनकरादिव ॥ १८
पेतुः क्षतजधारास्तु व्रणेभ्यस्तस्य सर्वशः ।
ताम्रगैरिकसंपृक्ता धारा इव धराधरात् ॥ १९
अवकीर्णं विमार्जन्ती भर्तारं रणरेणुना ।
अस्रैर्नयनजैः शूरं सिषेचास्त्रसमाहतम् ॥ २०
रुधिरोक्षितसर्वाङ्गं दृष्ट्वा विनिहतं पतिम् ।
उवाच तारा पिङ्गाक्षं पुत्रमङ्गदमङ्गना ॥ २१
अवस्थां पश्चिमां पश्य पितुः पुत्र सुदारुणाम् ।
संप्रसक्तस्य वैरस्य गतोऽन्तः पापकर्मणा ॥ २२
बालसूर्योदयतनुं प्रयान्तं यमसादनम् ।
अभिवादय राजानं पितरं पुत्र मानदम् ॥ २३ G 4 22 27 B 4 23 24 L 4 17 28

12 13 क्रुद्धम् (for दीप्तम्) Ñ2 V B D7 घोरमाशीविष दीप्त पर्वतस्येव गह्वरात्

18 a) G1 तस्मात् (for तस्य) Ś1 Ñ V B2 4 D7 12 Cr निष्क्रम(Ñ1 नि क्रम, Ñ2 °ष्क्रास्य, V1 °ष्क्रम्य, D12 °ष्काम)माणस्य, B1 3 G1 निकृष्य°, Cm g k as in text (for निरकृष्य°) —b) D3 5 8–11 T2 [अ]पि (for च) ❀ Cr g पूर्वोक्तश्लोकोक्तसर्पसाम्यापेक्षया 'च' शब्द ।, Ck 'च' शब्दाल्लोहितरक्तस्य बाणस्य द्युति ❀ —b) Ś1 Ñ V B D1 2 4 7 12 13 सायकस्या(Ñ1 D1 शरीराद्)भवद् (for बाणस्य च बभौ) Ś1 Ñ1 D1 2 4 12 13 वपु (for द्युति) —c) D5 8 –10 सनद्ध-(D5 °द्धो) (for -सरुद्धो) —d) D8–10 रश्मेर् (for रश्मिर्) ❀ Ck दिवा(°न ?)करात् व्यत्ययात्पञ्चमी। दिवा(°न ?)करस्य रश्मिरिव बभौ।, Ct दिनकरादिति पञ्चमी षष्ठ्यर्थे ❀ —For 18cd, Ś1 Ñ1 D1–3 11–13 subst

476* मरीचेरिव दीप्तस्य व्रजत्यस्त दिवाकरे।

[D3 11 ताम्रस्येवार्कपादस्य (for the prior half) Ñ1 गच्छति (for व्रजति) ]

—Ś1 D2 12 13 cont , Ñ2 V B D4 7 subst for 18cd

477* वर्षवेगनिगूढाया स्फुरन्त्या इव विद्युत ।

[Ś1 V1 D2 12 13 वर्षामेघ- (for वर्षवेग-) Ś1 D4 12 निरूढाया, B1 3 -विमू° (for -निगूढाया) Ś1 D2 4 12 स्फूर्जत्या (for स्फुरन्त्या) ]

19 a) Ñ2 V1 2 B D3 7 च, D6 ते (sic) (for तु) —b) Ñ2 D7 सर्वत (for °श) D3 11 व्रणात्तस्योद्धृते शरे ❀ Cv व्रणेभ्य हृदयनिखातशरसमुद्धर्हणाभिघातविवृतेभ्य शिलापादपादिप्रहरणव्रणेभ्य ।, Cr m शरपादपशिलाजनित-व्रणापेक्षया व्रणेभ्य इति बहुवचनप्रयोग ।, Cg व्रणेभ्य इति बहुवचन पाशाधिकरणन्यायेनावयवबहुत्वात्। यद्वा शिलापादप-प्रहारकृतव्रणानि एतावत्पर्यन्त शोणितनिर्गमशून्यतया स्थितानि इदानीं शरव्रणाच्छोणितनिर्गमकाले सर्वेभ्योऽपि शोणितानि सुस्रुवुरित्यर्थ । Ct व्रणेभ्य शरशिलापादपजनितेभ्य ❀ —N2 V B D7 ताम्रधातुविनिर्मुक्ता(V1 °विमुक्ता तु) —For 19 Ś1 Ñ1 D1 2 4 12 13 subst

478* पेतू रुधिरधाराश्च देहात्तस्य गतायुष ।
सगैरिका जलाधारा प्रावृषीव धराधरात् ।

[(1 2) Ñ1 illeg , D2 13 जलधरा (for जला°) D1 सगैरिको जलधर (for the prior half) Ś1 D12 धराधरा (for °रात्) ]

20 a) Ś1 Ñ V B D1 4 7 12 प्रमार्जंती, D3 11 प्रमृजती, D2 13 तु मा° (for विमा°) —b) Ś1 Ñ1 D2–4 11–13 -रेणुभि , Ñ2 V B D7 -पांशुभि , G2 -रेणुका (for -रेणुना) —c) Ñ1 D1 2 4 13 सास्रैर्, G1 3 M1 2 आस्रैर् (for अस्रैर्) G1 M2 नवजलै (for नयनजै ) D6 वीर (for शूर) Ñ2 V B D3 7 11 अश्रुपातै(D3 11 तारा सास्रै )र्नयनजै —d) D13 सचिते (sic) (for सिषेच) Ś1 Ñ1 D1 2 4 12 13 प्रमुखे (D1 °खा) पति, Ñ2 V B D7 भृश(B3 बहु)दु खिता, D3 11 [उ]ष्णैर्मुखे पति, D9 10 °हित, G2 °गत (for [अ]स्त्रसमा-हतम् )

21 Ñ1 D1 12 om 21ab —a) D6 -[उ]त्क्षिप्त- (for -[उ]क्षित-) —For 21ab, Ś1 Ñ2 V B D2–4 7 11 13 subst

479* विवर्तमान त दृष्ट्वा धरण्या पतित पतिम्।

[Ś1 D2 4 13 चेष्टमान तु त, B4 निवर्त°, D3 11 निश्चेष्ट निहत (for विवर्तमान त) ]

—c) Ñ2 D7 विक्रुश्य (for पिङ्गाक्ष) —d) D3 lacuna for अङ्गदम्

22 ab) B1 3 प्राप्य (for पश्य) Ś1 Ñ1 D3, 4 11 12 transp पश्य and पुत्र D6 स (for सु-) Ñ D13 -दारुण (for °णाम्) —D6 reads 22c–23 in marg —c) Ś1 D12 सप्रसक्तश्च राजासौ —d) Ś1 D12 गतोस्त, Ñ2 V B D7 कृतो(Ñ2 D7 °ता)त , D1 गतस्त्व, D3 11 13 G1 M2 °त, D9 मतात (sic) (for गतोऽन्त ) Ś1 Ñ1 D1–4 12 13 -कर्मकृत् , D9 °णा (for -कर्मणा)

23 Ś1 D4 12 om 23ab Ñ1 illeg for 23ab D6 reads 23 in marg (cf v l 22) —a) D5 8–10 T2 -[उ]ज्ज्वल- (for -[उ]दय-) —b) D4 8 G प्रयात —For 23ab, Ñ2 V B D1–3 7 11 13 subst

480* अप्रतीतोऽपि सतत नीयमान यमक्षयम्।

[B1 3 हि (for ऽपि) D1 2 13 अप्रमत्तो(D1 सप्रणीतो)सि (for अप्रतीतोऽपि) B1 नीयमानो, D1 3 ह्रियमाण, D2 13 ह्य° (for नीयमान) ]

—d) Ñ2 V B D7 पुत्र मानिन, D2 13 पितृमानद (for पुत्र मानदम्)

28 24 28 एवमुक्तः समुत्थाय जग्राह चरणौ पितुः ।
भुजाभ्यां पीनवृत्ताभ्यामङ्गदोऽहमिति ब्रुवन् ॥ २४
अभिवादयमानं त्वामङ्गदं त्वं यथा पुरा ।
दीर्घायुर्भव पुत्रेति किमर्थं नाभिभाषसे ॥ २५
अहं पुत्रसहाया त्वामुपासे गतचेतनम् ।
सिंहेन निहतं सद्यो गौः सवत्सेव गोवृषम् ॥ २६

इष्ट्वा संग्रामयज्ञेन नानाप्रहरणाम्भसा ।
अस्मिन्नवभृथे स्नातः कथं पत्न्या मया विना ॥ २७
या दत्ता देवराजेन तव तुष्टेन संयुगे ।
शातकुम्भमयीं मालां तां ते पश्यामि नेह किम् ॥ २८
राजश्रीर्न जहाति त्वां गतासुमपि मानद ।
सूर्यस्यावर्तमानस्य शैलराजमिव प्रभा ॥ २९

---

24 *a*) V1 B स उत्थाय, G2 समर्थाय, G (ed) स च तया (for समुत्थाय) D2 13 एवमुत्थाय स तदा —*c*) Ś1 D12 जानुभ्या Ś1 D1 2 4 12 13 चारु (D2 4 °नु-), G1 साधु (for पीन-) —After 24, Ñ2 V B D7 ins

481* त दृष्ट्वा रुपती तारा वालिन वाक्यमब्रवीत् ।

25 *a*) V2 अभिवादनमानस् (for °यमान). Ś1 V1 D4 7 12 तम्, Ñ2 V2 B1–3 D2 11 13 G3 स्वम्, D1 तु (with hiatus) (for त्वाम्) B4 अभिवादयत मे पुत्रम् (hypm) —*b*) Ś1 V B D3 4 11 12 न, Ñ1 स, Ñ2 D2 7 13 च, D1 सा (for त्व) Ñ1 illeg, D1 [अ]ब्रवीत्पुन, G2 पुरा यथा (by transp) (for यथा पुरा) ❀ Cv अभिवादयमानमित्यस्यार्थे उवाच तारेत्यनन्तर प्रकृत सबध्यते।, Cr अभिवादय राजानमि त्यस्यार्थे उवाच तारेत्यनन्तर प्रकृत सबध्यते। अभिवादय राजान त्वमिति पाठ ।, Cg अभिवादयमानमिति। त्वामभिवादयमान-मित्यन्वय ।, Ct त्वामभिवादयमानम्। इह तारावाक्यम् ❀ —After 25*ab*, Ś1 D4 12 ins

482* दृष्ट्वा तारा ततोवाच भर्तारमसितेक्षणा ।

—*c*) Ñ2 V B D7 आयुष्मान् (for दीर्घायुर्) —*d*) Ś1 Ñ1 D1 4 12 किमेव (for किमर्थं) V1 [अ]पि (for [अ]भि-)

26 *a*) M2 -सहाय (for °या) Ś1 Ñ V B D1 2 4 7 12 13 आर्यपुत्र सपुत्रा त्वाम् (D12 °त्रस्त्वम्) —*b*) Ś1 D12 उपास्ते (for °से) V3 जीवित, D3 11 T2 G1 3 M °स (for चेतनम्) —*c*) D6 8–10 T2 पातित, M1 [ए]व हत (for निहत) Ñ2 V B D7 गोष्ठे (for सद्यो) Ś1 Ñ1 D1 3 4 12 ईश्वरेण हत यज्ञे, D2 13 ईश्वर च हर यज्ञे (sic) ❀ Cv r सिंहेन निहतमिति पाठ ❀ —*d*) Ś1 Ñ V B D1–4 7 11–13 गो(Ñ1 V2 गो)पति (for गोवृषम्)

27 *b*) D8–10 M3 राम- (for नाना-) M3 -[अं]भसि (for °सा) Ś1 Ñ V B D1–4 7 11–13 T1 3 राम(V नाना)-वाणमहा(Ñ2 B4 D7 °या)भसा(T1 3 °सि) —*c*) Ś1 V2 B2 D6 8–10 तस्मिन B1 3 स्नात (for स्नात) —*d*) Ś1 Ñ1 D1 2 4 12 13 पत्न्या कि त्व, Ñ2 V B D3 7 11 किं त्व पत्न्या (for कथ पत्न्या)

28 Ñ2 V B D7 transp *ab* and *cd* —*b*) D3 11 transp तव and तुष्टेन Ś1 D2 4 12 13 माला देवासुराहवे, Ñ1 माला दैत्यासुराहवे, Ñ2 V1 3 B D7 स्वयमेवासुरे हते(V1 3 °राहवे), V2 स्वयमेवाहतेसुरे, D1 मायाविन्यसुरे हते —Ñ1 illeg from 28*c* up to प्रभा in 483* —*c*) Ś1 D12 -कौभमयीं, D2 4–6 8–10 13 T2 G M1 2 -कौं(D6 G M1 2 -कु)भीं(M2 °भ) प्रिया (for -कुम्भमयीं) D1 T1 3 शातकौंभी प्रिया(T1 3 °कुभमयी) माला —*d*) Ś1 D1 2 4 12 13 न ता, Ñ2 V B D7 न ते, D3 11 G3 ता न(G3 च) (for ता ते) D2 13 पश्यसि, G3 पश्याम (for पश्यामि) Ś1 Ñ2 V B D1 2 4,7 12 13 मूर्धनि, D11 ते कपे (for नेह किम्)

29 *ab*) D2 8–10 राज्य- (for °ज-) D2 अति- (for अपि). Ñ2 V B D7 न त्वा(V1 ते) श्रीर्विजहात्येव गतायुपमपि प्रभो —*c*) Ñ2 V B D7 11 अर्कस्य (for सूर्यस्य) ❀ Cm आवर्तमानस्य अवर्तमानस्येति च छेद । अदृश्यस्येत्यर्थ ।, Cg t आवर्तमानस्यास्त गच्छत इत्यर्थ (Ct गच्छत)।, Ck आवर्तमानस्येति। अस्तमयमानस्येत्यर्थ ❀ —*d*) V2 प्रभो (for प्रभा) —For 29*cd*, Ś1 Ñ1 D1–4 12 13 subst

483* गच्छत्यस्त दिनकरे शैलराज प्रभा यथा।

[Ñ1 illeg up to प्रभा (cf v l 28) Ś1 D12 -राज (for -राज) D4 तथा (for यथा) D3 शैलराजमिव प्रभा ]

—Thereafter Ś1 D2 4 12 13 cont, while Ñ2 V B D7 11 ins after 29

484* किष्किन्धेव पुरी पूर्वं स्वर्गमार्गे प्रकाशते।
विदित ते पर स्थान स्वर्गमार्गप्रदर्शनम्।

[(l 1) Ś1 D12 च (for [इ]व) Ś1 V2 -मार्गं(V2 °र्गं) (for -मार्गे) —(l 2) Ś1 D4 11 12 व्रजतस्ते पर मार्गं(D11 पुरे मार्गे), D2 13 जातस्ते परमो मार्ग (for the prior half) D2 सुर-, D13 स्वर- (for स्वर) Ś1 D2 4 11–13 -प्रदर्शि(D2 11 13 °र्श)न, V1 B प्रदर्शि(B4 °देशि)त (for -प्रदर्शनम्) ]

—After 484*, Ñ2 V B2 4 D7 read 4 20 22–24

—Ś1 D2 4 11–13 further cont, while Ñ1 D1 cont after 483*

485* सत्यजेय खलु प्राणास्त्वत्समागमकाङ्क्षिणी।
त्वया सह परे लोके यदि मे स्यात्समागम ।
न त्वस्ति हेतु कल्पो वा यन्मृतस्य समागम ।
स्वकर्मफलभोक्ता हि देहमुत्सृज्य गच्छति।

[(l 1) D1 लघु (for खलु) Ñ1 illeg for त्वत्समागम D2.13 त्वान् and -चारिणी (for त्वत् and -काङ्क्षिणी) Ś1 D12 त्वद्दर्शनाभिकाङ्क्षिणी (for the post half) —(l 2) D1 पर (for परे) —D13 om (hapl) l 3 —(l 3) D1 कल्पे, D4 काले, D12 कल्यो (for कल्पो) D2 न त्वाश्रयेण कल्पो वा, D11

न मे वचः पथ्यमिदं त्वया कृतं
न चास्मि शक्ता हि निवारणे तव ।
हता सपुत्रास्मि हतेन संयुगे
सह त्वया श्रीर्विजहाति मामिह ॥ ३०

इति श्रीरामायणे किष्किन्धाकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

## २४

गतासुं वालिनं दृष्ट्वा राघवस्तदनन्तरम् ।
अब्रवीत्प्रश्रितं वाक्यं सुग्रीवं शत्रुतापनः ॥ १
न शोकपरितापेन श्रेयसा युज्यते मृतः ।
यदत्रानन्तरं कार्यं तत्समाधातुमर्हथ ॥ २ G 4 24 2 B 4 25 2 L 4 18 0

न त्वास्ते देवकल्पो वा ( for the prior half ) —(1 4) Ñ1 illeg from भोक्ता up to गच्छति D2 13 तु ( for हि ) ]

30 Ñ1 illeg up to श्रीर्वि in d —a) Ś1 Ñ2 V B1 3 4 D1 2 4 7 12 13 तथ्यम् ( for पथ्यम् ) D3 11 अपि (for इद ) D12 transp त्वया and कृत —b) Ś1 D1 2 4 12 13 [ अ ]पि ( for [ अ ]स्मि) D11 G2 शक्त्या ( for शक्ता ) Ś1 D1 2 4 12 13 [ अ ]स्मि, Ñ2 V2 3 B D3 7 11 G1 3 M1 3 वि ( for हि ) —Ñ2 illeg from -वारणे up to हते in c —c) Ñ2 V B2 4 D7 हते( Ñ2 ˎ ) रणे( B2 युधि ) त्वयि, B1 3 रणे हते त्वयि ( for हतेन सयुगे ). —d ) Ñ2 V B D7 transp सह and त्वया D3 11 च ( for वि- ) B2 D5 8–10 अपि, D3 11 इति, M3 इव ( for इह ) Ś1 Ñ V B1 3 4 D1 2 4 7 12 13 च पलायते( Ñ2 V B1 3 4 D7 विनिर्गता ) मम ( for विजहाति मामिह ) —After 30, Ś1 D2 4 12 13 read 4 20 22–24

Colophon B1 3 om (*Sarga cont* ) —*Sarga name* Ś1 Ñ3 V B D2 4 7 12 13 ताराविलाप , Ñ1 D1 तारावाक्य, D3 11 ताराकरुणोक्ति —*Sarga no* (figures, words or both) Ś1 Ñ1 V1 B1 2 D2 4 om , Ñ2 V2 G3 22, V3 25 , D1 15 , D3 24, D11 20; D13 21 —After colophon, D13 reads St 1 and 6–16 of 4 21 with addl colophon, while G1 3 conclude with श्रीरामाय नम , G2 with ॐ

—After Sarga 23, D5–10 S ins an additional Sarga relegated to App I (No 15)

### 24

M1 begins with श्रीरामाय नम

1 D6 om from 1 up to प्राप्त in 9b ( cf v l 1 167 of App I No 15 ) —b ) Ś1 Ñ1 D1–4 11–13 लक्ष्मण परवीरहा —c ) V2 3 उवाच Ñ1 V1 3 B1 3 D1–4 11 प्रसृत ( for प्रश्रित ) —d ) Ś1 Ñ1 D1 2 4 12 13 मदचेतस, V1 °नाशन, D3 11 दीनमानस ( for शत्रुतापन ) —For 1, D6 8–10 S subst

486* स सुग्रीव च तारा च साङ्गदा सहलक्ष्मण ।
समानशोक काकुत्स्थ सान्त्वयन्निदमब्रवीत् ।

[ (1 1) T G2 3 M3 Cg k सुग्रीव चेव( T Ch चापि ) ( for स सुग्रीव च ) D6 9 M1 3 Cg सागद (for °दा ) D9 -लक्ष्मग ( for °ण ) ]

2 D6 om 2 ( cf v l 1 ) Ś1 Ñ1 D1–4 11–13 om ( except D3 11 hapl ) 2–12 —a ) Ñ2 V B2 4 D7 न तथा, B1 3 तथा न ( for न शोक- ) —b ) Ñ2 V B1–3 D7 नर ( for मृत ) B4 श्रेयो युज्येत वानर —d ) D10 अर्हथ . —For 2cd, Ñ2 V B D7 subst

487* सपुत्रा त्वा समाश्रित्य तारा वसतु साम्प्रतम् ।

[ B1.3 तिष्ठतु ( for वसतु ) V B2–4 सम्प्रति ]

—V1 cont

488* अपुत्रार्थे हि यद्दत्तं तत्समादातुमर्हसि ।

330 लोकवृत्तमनुष्ठेयं कृतं वो बाष्पमोक्षणम् ।
न कालादुत्तरं किंचित्कर्म शक्यमुपासितुम् ॥ ३
नियतिः कारणं लोके नियतिः कर्मसाधनम् ।
नियतिः सर्वभूतानां नियोगेष्विह कारणम् ॥ ४
न कर्ता कस्यचित्कश्चिन्नियोगे चापि नेश्वरः ।
स्वभावे वर्तते लोकस्तस्य कालः परायणम् ॥ ५
न कालः कालमत्येति न कालः परिहीयते ।
स्वभावं वा समासाद्य न कश्चिदतिवर्तते ॥ ६
न कालस्यास्ति बन्धुत्वं न हेतुर्न पराक्रमः ।
न मित्रज्ञातिसंबन्धः कारणं नात्मनो वशः ॥ ७

किं तु कालपरीणामो द्रष्टव्यः साधु पश्यता ।
धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः ॥ ८
इतः स्वां प्रकृतिं वाली गतः प्राप्तः क्रियाफलम् ।
धर्मार्थकामसंयोगैः पवित्रं प्लवगेश्वर ॥ ९
स्वधर्मस्य च संयोगाज्जितस्तेन महात्मना ।
स्वर्गः परिगृहीतश्च प्राणानपरिरक्षता ॥ १०
एषा वै नियतिः श्रेष्ठा यां गतो हरियूथपः ।
तदलं परितापेन प्राप्तकालमुपास्यताम् ॥ ११
वचनान्ते तु रामस्य लक्ष्मणः परवीरहा ।
अवदत्प्रश्रितं वाक्यं सुग्रीवं गतचेतसम् ॥ १२

---

3 Ś1 Ñ1 D1-5 11-13 om 3 (cf. v l 1 and 2) —b) G2 M1 Cr बाष्पमोचन, Cm g k t बाष्पमोक्षण (as in text) ❀ Ck कृतं बाष्पमोक्षणेनेति तृतीया न दृश्यते। अलं कृतेत्यादि योगे सर्वतो दृश्यते। अत कृत पर्याप्तमित्यर्थो न वर्णित ❀ —For 3ab, Ñ2 V B D7 subst.

489* शोक स्वभावानुगतो बाष्पमोक्ष कृतश्च ते।

[V2 सुभा (for स्वभाव-) B1 शोकप्रभावानुग+ (for the prior half) V1 3 B -मोक्ष (for -मोक्ष)]

—c) B4 उत्तर, I2 अतर (for उत्तर) —d) Ñ2 V B D7 कर्म शेषम्, D8-10 पर कर्म (with hiatus) (for कर्म शक्यम्)

4 Ś1 Ñ1 D1-5 11-13 om 4 (cf v l 1 and 2) —a) M3 नियत (for °ति) —b) Ñ2 V B D7 लोकसग्रह —c) Ñ2 B4 D7 लोकाना (for -भूताना) —d) Ñ2 V B D6 7 नि(B1-3 वि)योगेष्वपि (for °ष्विह) ❀ Ck सर्वभूताना नियोगाधिकृतप्राणिमात्रस्य तत्तत्कर्मनियोगेऽपि नियतिरेव कारणम् ❀

5 Ś1 Ñ1 D1-5 11-13 om 5 (cf v l 1 and 2) —a) V3 चिता (for कर्ता) B2 कोपि (for कश्चिन्). —b) D6 वा (for च) V B नापि च (by transp), Cr m g as in text (for चापि न) —c) Ñ2 V B D7 काल (for लोकस्) —d) Ñ2 V1 B D7 कस्य, V2 कर्तु, V3 स्य (illeg) (for तस्य) B1 परायण

6 Ś1 Ñ1 D1-5 11-13 om. 6 (cf v.l 1 and 2) —a) V1 स (for न) T2 [अ]काल (for काल) V2 पुनर् (for कालम्) V1 2 B1 2(*sup lin.* also) 3 D6 अभ्येति —c) Ñ2 V1 D8-10 T G1 M1 3 Ck च, Cv r m g as in text (for वा) B1-3 समाच्छाद्य (for °साद्य) —d) Ñ2 V B D7-10 Cv k t किंचिद्, Cr m g as in text (for कश्चिद्) Ñ2 अपि, V2 B1-3 अभि- (for अति-)

7 Ś1 Ñ1 D1-5 11-13 om 7 (cf. v l 1 and 2) —a) Ñ2 V3 B2 4 [आ]त्म(V3 [अ]नु, B2 4 [अ]थ)-बुद्धिर्वा, V1 B1 3 [आ]त्म(B3 [अ]थ)हेतुत्वान्, V2 [आ]त्मवृत्तिर्वा (for [अ]स्ति बन्धुत्व) —b) Ñ2 V B D7 बुद्धिर् (for हेतुर्) D7 वा (for न) —d) D6 T G2 3 M2 वश, G1 वशे (for वश).

8 Ś1 Ñ1 D1-5 11-13 om 8 (cf v l. 1 and 2) —a) Ñ2 V1 B D7 -परीणामे, V3 °तात्मा (for °णामो) —b) V1 B1.3 द्रष्टव्य Ñ2 V3 पश्यता, V1 2 B D7 दृश्यता (for पश्यता). —d) B1 कालद्रुम, D7 °कर्म- (for °क्रम). V1 M1 -समाहित

9 Ś1 Ñ1 D1-5 (up to प्राप्त in 9b) 11-13 om 9 (cf v l 1 and 2) —a) Ñ2 V B D7 प्रयात (V3 °त) (for इत स्वा) —b) Ñ2 V B D7 हृत (for गत). V2 3 B4 प्राप्त- (for प्राप्त). V2 B4 -क्रियाफल (for °फलम्) —c) Ñ2 V B D7 स सपत्नोथ(Ñ2 V2 3 D7 °त्नोर्थ-, V1 °त्व [sic]), D5 8-10 G1 3 M1 2 Cv r gp t सामदा(M2 Cv °मा)नार्थ-, D6 T धर्मकामार्थ (by transp), Cm g k as in text (for धर्मार्थकाम-) B4 सयुगै (sic). —d) Ñ2 V B D7 सत्कार्य (for पवित्र). B2 प्लवगाधिप.

10 Ś1 Ñ1 D1-4 11-13 om 10 (cf v l 2) —a) Ñ2 V B D7 अ(B2 स्व)धर्मफल, D6 सर्वधर्मस्य (for स्वधर्मस्य च). —b) Ñ2 V B D7 त्यक्त्वा(V1 3 B1 °क्ता) तेनात्मनस्तनु(V1 3 B1 3 °नु) —c) G3 प्रतिगृहीतश् (for परि°) —d) Ñ2 V1 2 B D7 स्व(V2 D7 सु)धर्मं परिरक्षता, D6 प्राणान्न परि°, T2 प्राणा न परिरक्षिता.

11 Ś1 Ñ1 D1-4 11-13 om 11 (cf. v l 2) —a) V2 3 एष वै निकृ(V3 °य)ति श्रेष्ठा —b) V2 3 गतोय, D6 या गतिं (for या गतो) V2 हरिपुगव —c) D9 तदा (for तद्) Ñ2 V B D7 अलं हि परिसतप्य(V1 °ताप, D7 °तापे) —d) B1 3 कार्य- (for प्राप्त-)

12 Ś1 Ñ1 D1-4 11-13 om 12 (cf v l 2) —a) B1 3 D6 च (for तु) T2 G M1 2 वचनात्त्वेव(T2 °च्चैव,

कुरु त्वमस्य सुग्रीव प्रेतकार्यमनन्तरम् ।
ताराङ्गदाभ्यां सहितो वालिनो दहनं प्रति ॥ १३
समाज्ञापय काष्ठानि शुष्काणि च बहूनि च ।
चन्दनानि च दिव्यानि वालिसंस्कारकारणात् ॥ १४
समाश्वासय चैनं त्वमङ्गदं दीनचेतसम् ।
मा भूर्वालिशबुद्धिस्त्वं त्वदधीनमिदं पुरम् ॥ १५
अङ्गदस्त्वानयेन्माल्यं वस्त्राणि विविधानि च ।
घृतं तैलमथो गन्धान्यच्चात्र समनन्तरम् ॥ १६
त्वं तार शिबिकां शीघ्रमादायागच्छ संभ्रमात् ।
त्वरा गुणवती युक्ता ह्यस्मिन्काले विशेषतः ॥ १७
सज्जीभवन्तु प्लवगाः शिबिकावाहनोचिताः ।
समर्था बलिनश्चैव निर्हरिष्यन्ति वालिनम् ॥ १८
एवमुक्त्वा तु सुग्रीवं सुमित्रानन्दवर्धनः ।
तस्थौ भ्रातृसमीपस्थो लक्ष्मणः परवीरहा ॥ १९
लक्ष्मणस्य वचः श्रुत्वा तारः संभ्रान्तमानसः ।
प्रविवेश गुहां शीघ्रं शिबिकासक्तमानसः ॥ २०

G 4 24 20
B 4 25 20
L 4 18 9

G3 °देव, M1 °त्तस्य ) ( for °नान्ते तु ) —[c] ) Ñ2 V B D7 अब्रवीत् V3 B1 4 D6 प्रसृत ( for °श्रित ) —[d] ) Ñ2 V B D7 प्लवगेश्वर ( for गतचेतसम् )

13 Ñ1 illeg from 13 up to 14[b] —[a] ) Ś1 Ñ2 V B D1 2 7 12 13 क्रियताम् ( for कुरु त्वम् ) Ś1 D12 एव ( for अस्य ) D4 illeg for कुरु त्वमस्य ❀ Cr कुरु त्वमस्येति पाठ ❀ —[c] ) Ñ2 V B1 3 4 D7 सह वै ( for सहितो ) B2 सह तारागदाभ्या च —[d] ) Ś1 D1 2 4 12 13 कुरु ( for प्रति ) Ñ2 V B D7 वीरेण च हनूमता, D3 11 सर्वैश्च हरिपुगवै

14 Ñ1 illeg for 14[ab] ( cf v l 13 ) —[a] ) Ñ2 V B D7 समानाय्य( V3 °नीय ) च, D12 °दाय च ( for समाज्ञापय ) —[b] ) D12 om ( hapl ) बहूनि च V2 B4 सुबहूनि च( B4 °न्यपि ), D9 च वनानि च ( for च बहूनि च ) —D6 reads 14[cd] in marg —[c] ) Ñ2 V B D1 7 चदनागुरु ( B4 °र )-, D6 T G1 M2 3 Cg °दीनि ( for °नि च ) Ñ2 V B D1 3 7 11 मुख्यानि, D2 13 रम्याणि ( for दिव्यानि ) —[d] ) Ñ2 V1 2 B -सत्कार- ( for -सस्कार- ) V1 2 B4 -कारण ( for °णात् ) Ś1 Ñ1 D2 13 वालिसस्कारण( Ñ1 °* , * [ illeg ], D13 °रिण ) प्रति, D1 4 12 °सकल( D1 °काल, L[ ed ]°कल्प )न प्रति, D3 11 °सस्करण प्रति

15 [a] ) Ś1 Ñ V B D1–4 7 11–13 तारा, D5 8–10 दीन ( for चैन ) —[b] ) Ś1 Ñ1 D1 4 12 च शुभेक्षण, Ñ2 V1 B D2 3 7 11 13 च शुभागद( B2 °भाशुभ ), V2 3 कनकागद, D6 G3 M2 °मानस, Cmp गतचेतस ( for दीनचेतसम् ) —[c] ) D11 नो ( for मा ) Ś1 D12 मा भूर्वालिकथाबुद्धिस्

16 [a] ) D9 G1 माल्य- ( for °ल्य ) Ś1 Ñ1 D12 आचक्ष्वेह च सन्माल्य( Ñ1 °क्ष्वे ****** [ illeg. ]), Ñ2 V B D7 हनू( Ñ2 V1 3 °नु )मन्गाच्छ( B4 °न्सस्तु ) माल्यानि, D1 13 आधत्स्व हनुमन्माला( D13 °ल्य ), D2 4 आध( D4 °द )त्स्वेह तु( D4 च ) सन्माल्य, D3 11 हनूमन्माल्यदामा( D11 °ना )नि —Ñ1 illeg. from 16[b] up to 17 —[b] ) M1 [ आ ]-भरणानि ( for विविधानि ) —After 16[ab], D3 11 ins

490* फलानि च समूलानि रत्नानि विविधानि च ।

—[c] ) D5 9 घृत- ( for घृत ) Ś1 D1–4 11–13 घृत( D2 सित, D3 °ते ) तैलं च गधाश्च, Ñ2 V B D7 गधतैलं च( B4 °लानि ) गधाश्च —[d] ) Ś1 B2 D1 4 12 यच्चान्यत्, D3 यच्चास्य, D11 यद्यस्य ( for °त्र ) D2 13 यच्चास्त्यन्य( D13 °न्यत्त )दनतर, G2 अन्यच्च तदनतर —After 16, D3 11 ins

491* तत्सर्वं शीघ्रमादाय तूर्णमानय मानद ।

17 Ñ1 illeg for 17 ( cf v l 16 ) —[a] ) Ñ2 V2 3 B D7 सत्वर, V1 स त्व च, D4 illeg, D6 11 त्व तावत् ( for त्व तार ) V3 भव्याम् ( for शीघ्रम् ) —[b] ) Ś1 D2 [ अ ]न्येहि, D1 4 12 13 [ अ ]भ्येहि, M2 ( after corr sec m as in text ) गच्छ, L( ed ) [ अ ]येहि( sic ) ( for [ आ ]-गच्छ ) Ś1 Ñ V B D1 2 4 7 12 13 वानर ( for सभ्रमात् ) D3 11 आगच्छादाय सत्वर —[c] ) Ñ2 V B D7 प्रोक्ता ( for युक्ता ) M3 transp गुणवती and युक्ता Ś1 D1–4 12 13 शुभा गुण( D2 13 पुण्य )वतीं युक्ता ( Ś1 D12 °क्ते [ sic ] ) —[d] ) Ś1 D4 12 तस्मिन्, D1 2 13 अस्मिन्, G1 त्वस्मिन्

18 [a] ) D3 प्लवगा —[b] ) B2 D1 G3 M2 3 वहनोचिता, D2 13 -वहने क्षमा, D3 11 -[ उ ]द्व° ( for -वाहनोचिता ) —[c] ) V1 शयित्वा ( for समर्था ) —[d] ) Ñ2 V B D7 ये हरि( V1 वहि )ष्यति, D6 T2 निर्द( T2 °व )हि°, G1 2 M1 निर्भ°, G3 निहनि°, M2 निर्ध° ( for निर्हरि° )

19 [a] ) Ñ2 V B D7 आज्ञाप्य चैव ( for एवमुक्त्वा तु ) —Ñ1 illeg from सुग्रीव up to सभ्रान्त in 20[b] V2 om from 19[b] up to 21[a] —[c] ) D3 11 भ्रातु, G1 °त्रा ( for भ्रातृ- ) B4 D4 G1 समीपेथ( D4 °पे स, G1 °पे च ) ( for °पस्थो ) Ś1 Ñ2 V1 3 B1–3 D1 2 7 12 13 तस्थौ भ्रातु समीपेथ( Ś1 D12 °पे स, D1 2 13 °पे तु ) —[d] ) D3 11 शुभलक्षण

20 V2 om 20, Ñ1 illeg for 20[ab] ( for both, cf v l 19 ) —[b] ) D7 13 T2 तारा ( sic ) ( for तार ) Ñ2 V1 B D7 सत्रस- ( for सभ्रान्त- ) Ś1 D2 12 तारा सभ्रात-मानसा —[c] ) Ś1 D9 12 गृह ( for गुहा ) —[d] ) Ñ2 V1 3 B D7 -नयनोद्यत, D3 6 9 11 G M1 2 -गात° ( for -सक्त-मानस ) Ś1 Ñ1 D1 2 4 12 13 वालिसत्का( D2 13 °त्स्का )र-कारणात्

21 21 10 आदाय शिबिकां तारः स तु पर्यापतत्पुनः ।
वानरैरुह्यमानां तां शूरैरुद्वहनोचितैः ॥ २१
ततो वालिनमुद्यम्य सुग्रीवः शिबिकां तदा ।
आरोपयत विक्रोशन्नङ्गदेन सहैव तु ॥ २२
आरोप्य शिबिकां चैव वालिनं गतजीवितम् ।
अलंकारैश्च विविधैर्माल्यैर्वस्त्रैश्च भूषितम् ॥ २३
आज्ञापयत्तदा राजा सुग्रीवः प्लवगेश्वरः ।
और्ध्वदेहिकमार्यस्य क्रियतामनुरूपतः ॥ २४
विश्राणयन्तो रत्नानि विविधानि बहूनि च ।
अग्रतः प्लवगा यान्तु शिबिका तदनन्तरम् ॥ २५
राज्ञामृद्धिविशेषा हि दृश्यन्ते भुवि यादृशाः ।
तादृशं वालिनः क्षिप्रं प्राकुर्वन्नौर्ध्वदेहिकम् ॥ २६

---

21 V2 om 21[a] (cf v l 19) —[a] ) Ś1 D2 4 T2 तारा, B2 वीर , D12 13 तारा ( for तार ) —[b] ) D2 4 12 T2 मा ( for म ) D2 om for पर्यापतत्पुन Ñ2 D7 पर्यागत , V2 D1 2 G1 2 M पर्य° ( for पर्यापतत् ) B2 पर , G( ed ) पुर ( for पुन ) Ś1 सानुजे सह वाधंरे , L( ed ) सानुगो दीनमानस —[c] ) G(ed.)वाहकैर् ( for °नरैर् ) D5 च ( for ता ) —[d] ) B4 चरैर् ( for शूरैर् ) Ś1 Ñ1 D1–4 11–13 शिबिका( D1 2 11 °का )वाहनोचितै —After 21, D5 6 8–10 S ins

492* दिव्या भद्रासनयुता शिबिका स्यन्दनोपमाम् ।
पक्षिकर्मभिराचित्रा द्रुमकर्मविभूषिताम् ।
आस्थिता चित्रपत्तीभि सुनिविष्टा समन्तत ।
विमानमिव सिद्धाना जालवातायनायुताम् ।
सुनियुक्ता विशाला च सुकृता शिल्पिभि कृताम् । [5]
दारुपर्वतकोपेता चारुकर्मपरिष्कृताम् ।
वराभरणहारैश्च चित्रमाल्योपशोभिताम् ।
गुहागहनसछन्ना रक्तचन्दनरूषिताम् ।
पुष्पौघै समभिच्छन्ना पद्ममालाभिरेव च ।
तरुणादित्यवर्णाभिर्भ्राजमानाभिरावृताम् । [10]
ईदृशीं शिबिका दृष्ट्वा रामो लक्ष्मणमब्रवीत् ।
क्षिप्र विनीयता वाली प्रेतकार्यं विधीयताम् ।

[ (l 1) Cr k भद्रासनगता ( for °युता ) —(l 2) D5 द्रुद ( for द्रुम ) D6 G1 -कर्मभिरावृता ( for °विभूषिताम् ) —(l 3) D8–10 T2 3 M3 Cg आचिता, M2 °हिता ( for आस्थिता ) D5 T2 -पत्रिभि , D6 -पद्माभि ( for -पत्तीभि ) D6 म ( for सु- ) —(l 4) M2 जान- ( for °ल ) M1 3 [ अ ]-न्विता ( for -[ आ ]युताम् ) —G2 om l 5–8 —(l 5) D8 स ( for सु- ) G1 M2 सुशुभा, M1 °दृढा ( for सुकृता ). T M3 विश्वकर्मणा —D9 om from परिष्कृताम् in l 6 up to सम in l 9 —(l 7) D6 M1 2 -मार्गैश् ( for हारैश् ). —(l 8) D8 10 T3 M2 भूषिता ( for रूषिताम् ) —(l 9) D8 10 T1 पुष्पाढ्यै —(l 11) M2 तादृशी ]

22 [b] ) Ñ1 illeg from शिबिका up to सहेव in [d] Ś1 D1 2 4 12 13 बली ( for तदा ) —[c] ) Ś1 D1 2 4 12 13 आरो ( Ś1 D12 °ज्ञा )पयदनुक्रोशाद्( D1 °शन ), Ñ2 V B D3 7 11 आरोपयदभि( V3 B4 °नि )क्रोशन् , D9 आरोपयति विक्रोशन —[d] ) V1 निनादेन ( for अङ्गदेन ) Ś1 Ñ1 D1 4 11–13 T2 सहैव त( D11 हि ), Ñ2 V B D7 सम( V B2 4 सह ) प्रभु , D2 सहैतुक, D3 संदेव ह ( for सहेव तु )

23 Ś1 Ñ1 D1 2 4 12 13 om 23[ab] —[a] ) Ñ2 V B D3 7 11 शिबिकाया तु( D3 11 च ) ( for °का चैव ) —[b] ) Ñ2 V B D7 11 नष्टजीवित —Ñ2 om 23[cd] —[c] ) D3 11 अलचकार ( for °कारैश्च ) —[d] ) D3 11 M1 वानर, G1 M2 शोभित ( for भूषितम् ) ❀ Cv r माल्यवस्त्रैश्च भूषितमिति पाठ ❀ —For 23[cd], Ś1 Ñ1 D1 2 4 12 13 subst

493* माल्यैश्च समलंकृत्य वाससा प्रवरेण च ।

[ Ñ1 illeg up to प्रव D2 च, D13 म ( for प्र- ) ], while V B D7 subst.

494* वाससाच्छादयामास माल्येनावचकार ह ।

[ V छदयामास ( for [आ]च्छा° ) D7 [ अ ]लचकार ( for [ अ ]व° ) B4 D7 च ( for ह ) ]

—After 23, G2 3 read 26[cd]

24 [a] ) Ñ1 राज्ञ , D2 3 11 13 तारा( D3 11 °र ) ( for राजा ) Ñ2 सह . . दयामास ( illeg ), V B D7 तदा चाज्ञापयामास ❀ Cm आज्ञापयदित्यस्मिन्श्लोके विश्राणयन्तेति श्लोके च इतिकरण द्रष्टव्यम् ❀ —[c] ) Ś1 D6 12 13 T2 M3 Cg औ( D13 ऊ )र्ध्वदैहिक, D2 3 11 ऊर्ध्व°; Ck t as in text ( for और्ध्वदे° ) —[d] ) Ñ2 V B D7 इति वानरान् , D5 6 8–10 T G1 3 M2 3 Ct °कूलत ( for अनुरूपत )

25 Ś1 Ñ1 D1 2 4 12 13 om 25[ab]. —[a] ) D3 11 विकिरतश्च ( for विश्राणयन्तो ) —[b] ) G2 धनानि ( for बहूनि ) M3 [ अ ]पि ( for च ) —[c] ) D6 यान्ति ( for यान्तु ). —[d] ) D6 T M1 3 Cr g समनतर ( for तद° ). ❀ Cr शिबिका समनन्तरम् । अत्रेतिकरण द्रष्टव्यम् । आज्ञापयत्तदेति पूर्वेण सबन्ध ।, Cg शिबिकासमनन्तरमासन्दीसमीपे। अत्रेतिकरण द्रष्टव्यम् । इत्याज्ञापयदिति पूर्वेण संबन्ध ❀ —For 25, Ñ2 V B D7 subst

495* ततो रत्नानि हरयो बहूनि विविधानि च ।
ययुरग्रे प्रयच्छन्त शिबिका समनन्तरम् ।

[ (l 1) Ñ2 भूरीणि ( for बहूनि ) —(l 2) V2 शिबिका ( for °का ) ]

26 [a] ) B4 राज्ञा मूर्ति ( for °ज्ञामृद्धि- ) Ñ1 -विशेषास्तु, V1 °स्ते, D7 °षा ( for विशेषा हि ) —For 26[ab], Ś1 D1–4 11–13 subst

अङ्गदं परिगृह्याशु तारप्रभृतयस्तथा ।
क्रोशन्तः प्रययुः सर्वे वानरा हतबान्धवाः ॥ २७
ताराप्रभृतयः सर्वा वानर्यो हतयूथपाः ।
अनुजग्मुर्हि भर्तारं क्रोशन्त्यः करुणस्वनाः ॥ २८
तासां रुदितशब्देन वानरीणां वनान्तरे ।
वनानि गिरयः सर्वे विक्रोशन्तीव सर्वतः ॥ २९
पुलिने गिरिनद्यास्तु विविक्ते जलसंवृते ।
चितां चक्रुः सुबहवो वानरा वनचारिणः ॥ ३०
अवरोप्य ततः स्कन्धाच्छिबिकां वहनोचिताः ।
तस्थुरेकान्तमाश्रित्य सर्वे शोकसमन्विताः ॥ ३१
ततस्तारा पतिं दृष्ट्वा शिबिकातलशायिनम् ।
आरोप्याङ्के शिरस्तस्य विललाप सुदुःखिता ॥ ३२

G 4 24 32
B 4 25 40
L 4 18 20

496* राज्ञामृद्धिविशेषो हि दृश्यते भुवि यादृश ।

[ Ś1 D12 राज्ञो मूर्ध्नि, D13 °ज्ञा वृद्धि- ( for राजामृद्धि- ) ]

—After 26$^{ab}$, D5 6 8–10 G2 3 M1 ins

497* तादृशैरिह कुर्वन्तु वानरा भर्तृसत्क्रियाम् ।

[ D5 M1 तादृशानिह, G2 3 °शीमिव ( for °शैरिह ) D6 तादृशीमिह कुर्वंति ( for the prior half ) D6 9 भर्तु ( for भर्तृ- ) M1 -मत्क्रिया ( for °याम् ) ]

—D6 transp 26$^{cd}$ and 27, G2 3 read 26$^{cd}$ after 23 —$^{c}$ ) Ñ2 V B D7 तादृशैर् ( for °श ) —D9 om from वालिन up to हत- in 27$^{d}$ Ś1 D4 6 12 वालिन ( for वालिन ) Ś1 वीर, Ñ2 V1 3 B D7 सर्वं, V2 सर्वान्, D1–4 11–13 शीघ्र ( for क्षिप्र ) —Ñ1 illeg from क्षिप्र up to देहिकम् in $^{d}$ —$^{d}$ ) Ñ2 V B D7 अकुर्वन्, D3 11 क्रियताम् ( for प्रा° ) D5 M3 Cg और्ध्वदेहिक, Cv r और्ध्व-देहिक ( as in text ) Ś1 D1 2 4 12 13 कुर्वंतु सचिवा ( D2 शिबिका ) स्वय( D13 शिवा ).

27 D9 om up to हत- in $^{d}$ ( cf v l 26 ) D6 transp 26$^{cd}$ and 27 —$^{a}$ ) Ś1 D12 अगद ( sic ) ( for °द ) Ñ1 प्रति . . [ illeg ], Ñ2 B1–3 D7 प्रतिगृह्याशु, G( ed ) °थ, Cr as in text ( for परि° ) —Ñ1 illeg for 27$^{b}$ —$^{b}$ ) Ś1 Ñ2 D1 2 4 6 11–13 T M Cr तारा-, Cg as in text ( for तार- ) Ś1 D1 2 4 12 13 स्त्रिय, V B D6 7 T1 3 G M Cr तदा ( for तथा ) ❀ Cg तारप्रभृतयो वानरा इति सम्यक् ❀ —$^{c}$ ) Ñ1 illeg from प्रययु up to इ in 27$^{d}$ D3 11 ते ययु ( for प्र° ) Ñ2 V B D7 तत्र ( for सर्वे ) Ś1 क्रोशतस्तत्रानुयु , D1 2 4 13 क्रोशत्यस्त चा ( D2 13 °श्चाभ्य, D4 °स्त स्व )नुययु , D12 क्रोशत्योनुययुस्तत्र —$^{d}$ ) M1 वानर्यो ( for °रा ) Ś1 Ñ1 D12 प्रसभ त्या( Ñ1 . . . [ illeg ] )हत हरि( Ñ1 पति ), Ñ2 V B D3 7 11 प्रशसतश्च वालिन, D1,2 4 प्रशसत्यो हत हरि( D1 हरि हत [ by transp ], D13 प्रशसन्त्यादृश हरि ❀ Cr अङ्गदं परिगृह्याशु ताराप्रभृतयस्तदा । क्रोशन्त प्रययु सर्वे वानरा हतबान्धवा । इति पाठ ❀ —After 27, D5 6 8–10 S ins

498* तत प्रणिहिता सर्वा वानर्योऽस्य वशानुगा ।
चुक्रुशुर्वीर वीरेति भूय क्रोशन्ति ता स्त्रिय ।

[ D5 reads from l 1 up to 28$^{b}$ in marg —( l 1 ) D6 सर्वे ( for सर्वा ) —( l 2 ) D5 8–10 ता प्रिय, D6 वानरा ( for ता स्त्रिय ) ]

28 D5 reads 28$^{ab}$ in marg ( cf v l 498* ) —$^{a}$ ) Ñ2 V B D3 11 चास्य, D7 चापि ( for सर्वा ) —$^{b}$ ) Ś1 Ñ1 D1 2 4 12 13 -भर्तृका , Ñ2 V B D5 7–10 G3 -बाधवा ( for -यूथपा ) —$^{c}$ ) B4 अथ ( for अनु- ) Ś1 Ñ1 D1 2 4 12 13 हत नाथ, Ñ2 V B D7 कपींद्र त( Ñ2 illeg , D7 तु ), D5 8–10 च भ° ( for हि भर्तार ) —$^{d}$ ) Ś1 D1 2 4 12 13 करुण तदा( D1 [ marg ] °था ), Ñ1 मधुरं तदा, Ñ2 V B D7 बाष्पविक्लवा , D3 11 दीनमानसा ( for करुणस्वना )

29 D1 reads from 29 up to पुलिने in 30$^{a}$ in marg —$^{a}$ ) V3 D11 तारा-, B4 आसां ( for तासा ) —$^{c}$ ) Ś1 Ñ V B D M2 चैव, G1 2 शैला , G3 वृक्षा ( for सर्वे ) —$^{d}$ ) G1 M1 2 सर्वश ( for °त ) Ś1 Ñ V B D1–4 7, 11–13 रुद( Ñ2 स्यद [ sic ], D3 नद )तीव समतत, G3 क्रोशतीव च सर्वश

30 D1 reads पुलिने in marg ( cf v l 29 ) —$^{a}$ ) Ñ1 illeg from नद्यास्तु up to वन in $^{d}$ V3 D2 13 -नद्याश्च, B1 3 पार्श्वे च, D1 -दुर्गे च ( for -नद्यास्तु ) —$^{b}$ ) Ś1 D2 4 12 13 गिरिसवृते, G3 °युते ( for जलसवृते ) —$^{c}$ ) Ñ2 V B D1 6 7 G1 2 M2 सुबहुशो —$^{d}$ ) Ś1 Ñ V B D1–4 7 11–13 राज( Ñ1 . . [ illeg ], Ñ2 V B D7 वालि, D1 गुरु, D3 11 गुण )वल्लभा , T M3 शोककर्शिता ( for वनचारिण )

31 $^{a}$ ) V1 अधिरोप्य, G1 अन्व° ( for अव° ) Ñ2 V B D7 च ता ( for तत ) B1 3 तं च ( for स्कन्धाच् ) Ś1 Ñ1 D1 2 4 12 13 अवतार्याशु( D1 2 4 13 °र्य तु ) ते स्कधाच् —$^{b}$ ) Ś1 Ñ2 V B D2 4 7 12 13 वानरर्षभा , Ñ1 वाहनो * ( illeg ), D1 3 6 11 G3 M1 वा°, D5 8–10 वानरोत्तमा ( for वहनोचिता ) —$^{c}$ ) Ñ2 V B D7 आसाद्य ( for °श्रित्य ) —$^{d}$ ) Ś1 Ñ V B D1–4 7 11–13 ध्यानपरायणा , D5 6 8–10 G3 शोकपरायणा .

32 $^{b}$ ) Ñ2 V B D7 [ आ ]लयशायि( B4 °वासि )न ( for -तलशायिनम् ) —$^{cd}$ ) Ś1 D12 [ अ ]क ( for [ अ ]ङ्के ) D1 कृत्वा ( for तस्य ) G1 शत्रुग्रीचक्रोकमतथा गतासु वानरोत्तम, M2 प्रसक्ताश्रुमुखी दीन पर्यदेवयदातुरा —After 32, Ś1 Ñ V B D1–4 7 11–13 ins

499* अङ्गदोऽय प्रियो नाम ननु ते पुत्रवत्सल ।

सुग्रीवेण ततः सार्धमङ्गदः पितरं रुदन् ।
चितामारोपयामास शोकेनाभिहतेन्द्रियः ॥ ४०
ततोऽग्निं विधिवद्दत्त्वा सोऽपसव्यं चकार ह ।
पितरं दीर्घमध्वानं प्रस्थितं व्याकुलेन्द्रियः ॥ ४१
संस्कृत्य वालिनं ते तु विधिपूर्वं प्लवंगमाः ।
आजग्मुरुदकं कर्तुं नदीं शीतजलां शुभाम् ॥ ४२
ततस्ते सहितास्तत्र अङ्गदं स्थाप्य चाग्रतः ।
सुग्रीवतारासहिताः सिषिचुर्वालिने जलम् ॥ ४३
सुग्रीवेणैव दीनेन दीनो भूत्वा महाबलः ।
समानशोकः काकुत्स्थः प्रेतकार्याण्यकारयत् ॥ ४४ G 4 24 44 B 4 25 53 L 4 18 31

इति श्रीरामायणे किष्किन्धाकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

---

40 [a]) Ś1 D2 4 12 13 तदा (for तत ) D7 साकम् (for सार्धम् ) —[b]) D5 8–10 T1 सोगद (for अ°) Ñ1 तदा (for रुदन् ) —[d]) Ś1 Ñ1 D1–4 12 13 [उ]पह( D1 °हि )तेन्द्रिय , D5 8–10 °लुतेन्द्रिय , D11 पिहि° (for [अ]-भिहतेन्द्रिय ) Ñ2 V B D7 रुदमानो मुहुर्मुहु

41 Ñ1 om from 41 up to विधिपूर्वं in 42[b] Ś1 D2 G2 om (hapl) 41 —[a]) D5 om (hapl) from विधिवद् up to 42[a] ❀ Ct विधिवद्देवाशत्वेन स्वयज्ञातवेदत्वाज्जानवत् तिर्यग्देहोचितविधिवदित्यर्थ । विधिवदग्निहोत्रविधिनेत्यर्थ इत्यन्ये ❀ D1 चेष्टा, D6 T2 हुत्वा, D12 देवान् (for दत्त्वा ) —[b]) V2 च (for स ) M1 स (for ह ) —D1 om 41[cd] —[d]) D12 13 चाकुलेन्द्रिय

42 Ñ1 om up to विधिपूर्वं in 42[b], D5 om 42[a] (for both, cf v l 41 ) —[a]) D8–10 त (for ते ) Ś1 D1 2 4 12 13 वालिन ते( Ś1 D13 त ) तु सकल्य( D1 °ज्वाल्य, D2 °काल्य ), Ñ2 V1 3 B D7 वालिन ते तु स कृत्य( B1 °त्वा ), V2 वालिन तु समुत्सृज्य, D3 11 वालिन ते तु सस्कृत्य —[b]) Ñ2 D7 विविवच्च (for °पूर्वं ) D5 8–10 विधिवत्प्लवगर्षभा —Ñ1 illeg from [c] up to शीत in [d] —[c]) Ś1 D1 2 4 12 13 प्रजग्मुर् (for आ° ) —[d]) Ś1 Ñ2 V1 3 B D1–4 7 11–13 पपा, V2 स्पर्श- (for नदीं ) D3 T1 2 G1 2 M1 2 शिव , D5 8–10 T3 G3 शुभ (for शीत ) Ñ1 D5 6 8–10 G3 M3 शिवा (for शुभाम् )

43 For 43–44, Ś1 Ñ V B D1–4 7 11–13 subst 503* —[a]) G2 सचिवास् (for सहितास् ) —Note hiatus between [a] and [b] —[b]) T M1 3 ह्यगद( to avoid hiatus ) —[d]) D5 8–10 T1 वानरा, D6 T2 G2 3 M1 2 °नो (for वालिने )

44 [a]) D5 8–10 [इ]व (for [ए]व ) —[d]) M2 कार्यम् (for कार्याणि ) ❀ Cr समानशोक काकुत्स्थ इत्यनेन समानदु खत्व सखित्व चे येतत्प्रकटितम् ❀ —For 43–44, S1 D1 2 4 11–13 subst , Ñ1 subst l 1–3, Ñ2 V B D3 7 subst l 1–2 only

503* तत कृतोदका सर्वे पम्पाया क्लिन्नवासस ।
आजग्मू राघव द्रष्टु लक्ष्मण चामितौजसम् ।
तस्थु प्राञ्जलय सर्वे सुग्रीवश्च सहाङ्गद ।
वालिन पूर्ववृत्तानि कथयन्तोऽद्भुतानि च ।

[ (l 1) B4 पपाया (for °या ) V1 वानरर्षभा , D7 (also as above ) °स (for क्लिन्नवासस ) —D7 reads l 2 in marg —(l 2) Ś1 D12 आययू, D1 प्र° (for आजग्मू ) V2 3 B2 सहिता राम (for राघव द्रष्टु ) Ñ2 V1 3 B D3 7 11 महौजस, V2 °स, V3 महाभुज (for [अ]मितौजसम् ) —(l 3) Ś1 सहागदा (for °द ) —(l 4) D2 ते (for च ) ]

—After 44, D5 6 8–10 S ins

504* ततोऽथ त वालिनमग्र्यपौरुष
प्रकाशमिक्ष्वाकुवरेषुणा हतम् ।
प्रदीप्य दीप्ताग्निसमौजस तदा
सलक्ष्मण राममुपेयिवान्हरि ।

[ (l 1) D6 [उ]ग्र्त, T G2 3 M3 Cg तु त, G1 M1 हत, M2 रत (for ऽथ त ) —(l 2) D9 11 प्रकाम् (for °शम् ) G2 -वरेण चाहत (for °षुणा हतम् ) —(l 3) T2 प्रदीप्त (for °प्य ) ]

Colophon D1 om —*Sarga name* Ś1 Ñ1 D12 वालिसस्क( D12 °सत्क )रण( Ñ1 °... + [illeg] ), Ñ2 V B D2–4 7 11 13 वालिसत्कार ( D2 3 11 13 °सस्कार ) —*Sarga no* (figures, words or both) Ś1 Ñ1 V1 B1 2 D2 4 12 om , Ñ2 V2 G3 24 (as in text ), V3 27, B3 4 D3 5–10 T G1 2 M 25 , D11 21 , D13 23 —After colophon, G concludes with श्रीरामाय नम

संप्रस्थिता मानसवासलुब्धाः
प्रियान्विताः संप्रति चक्रवाकाः ।
अभीक्ष्णवर्षोदकविक्षतेषु
यानानि मार्गेषु न संपतन्ति ॥ १६
क्वचित्प्रकाशं क्वचिदप्रकाशं
नभः प्रकीर्णाम्बुधरं विभाति ।
क्वचित्क्वचित्पर्वतसंनिरुद्धं
रूपं यथा शान्तमहार्णवस्य ॥ १७
व्यामिश्रितं सर्जकदम्बपुष्पै-
र्नवं जलं पर्वतधातुताम्रम् ।
मयूरकेकाभिरनुप्रयातं
शैलापगाः शीघ्रतरं वहन्ति ॥ १८
रसाकुलं षट्पदसंनिकाशं
प्रभुज्यते जम्बुफलं प्रकामम् ।
अनेकवर्णं पवनावधूतं
भूमौ पतत्याम्रफलं विपक्वम् ॥ १९
विद्युत्पताकाः सबलाकमालाः
शैलेन्द्रकूटाकृतिसंनिकाशाः ।
गर्जन्ति मेघाः समुदीर्णनादा
मत्ता गजेन्द्रा इव संयुगस्थाः ॥ २०

---

—$^c$ ) L( ed )स्थिरा ( for स्थिता ) V2 om , B3 च ( for हि ) D3 मनुजाधिपाना —$^d$ ) Ś1 D12 प्रवासिता, D10 °ना ( for प्रवासिनो ) Ś1 V B D11 12 स्वदेश ( for स्वदेशान् ).

**16** For sequence in Ś1 D12, cf v l 3 Ñ B1 D1 2 4 7 13 om 16 ( cf v l 14 ) —$^a$ ) Ś1 D12 मानव- B3 कामलुब्धा, D6 वासजस्था V3 मानसर सलुब्धा . —$^b$ ) V1 D3 11 राजहसा ( for चक्रवाका ) V2 3 B2 4 प्रियान्विता हसगणास्तदानी —B3 om 16$^{cd}$ —$^c$ ) Ś1 D12 भे( D12 भी )कान-, V3 अतीक्ष्ण , L( ed )भेकानु- ( for अभीक्ष्ण- ) D6 -वर्षोदर- Ś1 D12 -मोक्षितेषु, V2 3 D6 G1 -वीक्षितेषु, D3 11 -विकृतेषु, Ck t as in text ( for -विक्षतेषु ) —$^d$ ) Ś1 D12 जानामि, V1 मार्गेषु ( for यानानि ) V1 जानामि, V2 om ( for मार्गेषु ) V2 B2 4 transp यानानि and मार्गेषु Ś1 D12 च ( for न ) V1 D3 11 सचरति ( for सपतन्ति ) —After 16, V1 reads 31, preceded by l 5–8 of 540*.

**17** For sequence in Ś1 D12, cf. v l 3 Ñ V1 B1 D1 2 4 7 13 om 17, T1 damaged for 17 ( for all except V1 T1, cf v l 14 ).—$^b$ ) D12 प्रभाति —$^c$ ) Ś1 -सनिरुद्ध- —$^d$ ) D3 चैव ( for शान्त- )

**18** For sequence in Ś1 D12, cf. v l 3 Ñ B1 D1 2 4 7 13 om 18 ( cf. v l 14 ) V1 reads 18 and 20 after 27.—$^a$ ) Ś1 D12 व्यामिश्रिता ( for °श्रित ) —For 18$^{ab}$, B3 subst

533* व्यामिश्रित सर्जकदम्बनीप-
बिल्वेपुकस्तिन्दुककेशरैश्च ।

—B3 om 18$^{cd}$ —$^c$ ) Ś1 अतीव जुष्टा , D6 अवानुयात, D10 M3 अनुप्रयात, L( ed ) अतीवघुष्टा , Cg.k t as in text ( for अनुप्रयात ) V1 मयूरकेकानुरुतैरुपेतै , V2 3 B2 4 मयूरकेकानुरुतानुयात, D3 5 11 G2 3 M1 2 मयूरकेकाभिरुतानुया( G3 °या )त, G1 मयूरकेकाभिरुतेन यात —$^d$ ) Ś1 शैलाघना, D12 शैला॰ ( for °पगा ) V1 वहति, D5 प्रया॰ ( for वहन्ति ) V2 3 B2 4 शीघ्रमभिप्रयाति ( for शीघ्रतर वहन्ति )

**19** For sequence in Ś1 D12, cf v l. 3 Ñ V1 B1 D1 2 4 7 13 om 19 ( for all except V1, cf v l 14 ) —$^a$ ) Ś1 D12 रसातले, D5 ( also रसातलं in marg ) रसाकुज ( for रसाकुल ) Ś1 चावर , D12 . ॰द- ( for षट्पद- ) D3 11 -सनिकीर्ण ( for °काशं ) —T1 damaged for 19$^{bc}$.—$^b$ ) V2 प्रयुज्यते, M1 प्रभ्रश्यते ( for प्रभुज्यते ) —V2 om ( hapl ) from प्रकाम up to फल in 19$^d$. V3 B2 3 विपक्ष, B4 विपक्व, D3.11 वितान्त्र, D5 9 प्रकाश ( for प्रकामम् ) —$^c$) B3 पतित विभाति ( for पवनावधूत ) —$^d$ ) Ś1 D12 [ श्रा ]शु ( for [ श्रा ]म्र- ). B3 सशब्दं ( for विपक्वम् )

**20** For sequence in Ś1 D12, cf v l 3 —Ñ B1 D1 2 4 7 13 om. 20 ( cf v l 14 ) V1 reads 18 and 20 after 27 —$^a$ ) V1 विद्युत्पताका, D12 विद्युद्बलाका , T1 damaged ( for विद्युत्पताका ) —$^b$ ) B3 महेन्द्र- ( for शैलेन्द्र- ) V1 -तुल्या-, B4 -कूला- ( for -कूटा- ) V1 -सनिवेशा ( for °काशा ) Ś1 D12 शैलेन्द्ररू( D12 °कू )पे गिरिसनिकाशा —B3 om 20$^{cd}$ —$^d$ ) G1 महा- ( for मत्ता ) —After 20, Ś1 D12 ins

534* सप्तच्छदाना कुसुमोपगन्धः
षट्पादवृन्दैरनुगीयमान ।
मत्तद्विपाना पवनानुसारा-
द्दोप वनेष्वभ्यधिक करोति ।

[ (l. 4) D12 [ अ ]त्यधिक ( for [ अ ]भ्य° ) ]

—After 20, B3( after 20$^{ab}$ owing to om ) D3 5 6. 8–11 S ins , V1 3 ins l 5–8 only, while V2 B2 4 ins l 3–8 after 20

535* वर्षोदकाप्यायितशाद्वलानि
प्रवृत्तनृत्तोत्सवबर्हिणानि ।
वनानि निर्वृष्टबलाहकानि
पश्यापराह्णेष्वधिक विभान्ति ।

मेघाभिकामा परिसंपतन्ती
संमोदिता भाति बलाकपङ्क्तिः ।
वातावधूता वरपौण्डरीकी
लम्बेव माला रचिताम्बरस्य ॥ २१
निद्रा शनैः केशवमभ्युपैति
द्रुतं नदी सागरमभ्युपैति ।
हृष्टा बलाका घनमभ्युपैति
कान्ता सकामा प्रियमभ्युपैति ॥ २२
जाता वनान्ताः शिखिसुप्रनृत्ता
जाताः कदम्बाः सकदम्बशाखाः ।
जाता वृषा गोषु समानकामा
जाता मही सस्यवनाभिरामा ॥ २३

G 4 0 0
B 4 28 25
L 4. 21. 24

समुद्वहन्त सलिलातिभार
बलाकिनो वारिधरा नदन्त ।
महत्सु शृङ्गेषु महीधराणा
विश्रम्य विश्रम्य पुन प्रयान्ति ।

[ (l 1) D6 -[आ]प्यायत- ( for -[आ]प्यायित- ) D6 8 10.11 G M1 2 -शाड्वलानि, D9 -शादुलानि ( for -शाद्वलानि ) —(l 2) B3 D11 -नृत्योत्सव-, D6 -नित्यो°, G2 -गीतो° ( for -नृत्तो° ) T1 damaged from बर्हिणानि up to [अ]धिक in l 4 D3 11 -बर्हणानि —(l 3) B2 G3 M1 निविष्ट, B4 M2 निर्घुष्ट, D3 T2 निर्वृत्त ( for निर्वृष्ट- ) —(l 4) B4 D3 11 प्रत्य ( for पश्य ) B2 [अ]धिका- ( for [अ]धिक ) G1 [अ]पराक्लिम्यधिक ( for °भ्यधिक ) G2 विभाति B3 आपोपगगोभ्यधिक विशति —T1 damaged for l 5 —(l 5) B4 समुद्वहत ( for °त ) V1 सलिलौघ-, B2 3 सलिलाभि- —(l 6) B4 बला ? B3 D3 11 नदति V1 बलाजवेते प्रतिदर्शयत —(l 7) V1 अभ्रूच ( for महत्सु ) —(l 8) G2 विश्राम्य विश्राम्य V2 3 B2 3 इवोपयाति, B4 यथा प्रयाति ]

—Thereafter, V3 B4 Cont

535(A)* मेघार्दिता भाति बलाकपङ्क्ति-
र्मालेव धूतारवपौण्डरीकी ।

[ (l 1) V3 damaged for मेघार्दिता ],

while V1 cont l 31–32 of 542*

**21** For sequence in Ś1 D12, cf v l 3 —Ñ B1 D1 2 4 7 13 om 21 ( cf v l 14 ) V1 om 21–24 —$^{a}$) Ś1 V3 D12 मेघानिकाम, V2 मेघान्तिकास (sic), B2 4 °काम ( for मेघाभिकामा ) Ś1 D12 परिसपतति, B3 इव सपतति, T3 °सपतत —T2 om 21$^{b}$–22$^{b}$ —$^{b}$) Ś1 D12 समेधिता, D5 समोहिता, G1 सा मोदिता ❀ Ck t बलाकपङ्क्तिरिति छान्दसो( Ct °त्वार्षो ) ह्रस्व ❀ —T1 damaged from 21$^{c}$ up to l 2 of 536* —B3 reads 21$^{c}$–27 after 30$^{ab}$ —$^{c}$) Ś1 D12 परपुडरीका, D3 11 चलपुडरीका, G1 °पौंडरीक, G2 M3 °पुडरीकी( G2 °का ), Cm g k t as in text ( for वरपौण्डरीकी ) B3 वातावधूतैरिव पुडरीकैर् —$^{d}$) V2 3 रुचिता, D5 8–10 Ct रुचिरा-, Cg k as in text (for रचिता-) Ś1 D12 लवालकाभा जलदाश्वरति, B3 लवेव माला रविनिब-कस्य —After 21, V2 B2 4 D3 5 6 8–11 T1 3 G M ins, while B3 ins l 3–4 only after 21

536* बालेन्द्रगोपान्तरचित्रितेन
विभाति भूमिर्नवशाद्वलेन ।
गात्रानुपृक्तेन शुकप्रभेण
नारीव लाक्षोक्षित कम्बलेन ।

[ T1 damaged for l. 1–2 —(l 1) B4 -गोप्रातर-, G1 M1 -गो( M1 को )पावलि, G3 M3 -कोपातर- ( for -गोपान्तर- ) B4 -चित्रितेव —(l 3) B3 गात्राणि लिप्तेन, D3 6 11 T1 3 G3 M3 °वृत्तेन, D5 गोत्रानुवृत्तेन, G1 M2 °रक्तेन, G2 °विद्धेन, M1 Ck °पक्तेन, Ct as above ( for गात्रानुपृक्तेन ) G1 शुभ- ( for शुक- ) V2 B2 4 निद्राशनै ( B4 °गता ) केशरकप्रभेण —(l 4) B3 शरीरमालवकम्बकेन ]

**22** For sequence in Ś1 D12, cf v l 3 and for sequence in B3, cf v l 21 Ñ V1 B1 D1 2 4 7 13 om 22, T2 om 22$^{ab}$ ( cf v l 14 and 21 ) —$^{a}$) D12 lacuna for शनै के- M3 वनै ( for शनै ) B2 केशरम् —$^{b}$) D6 दृढ ( for द्रुत ) —$^{c}$) Ś1 B3 D12 दृष्ट्वा ( for हृष्टा ) —Ś1 D12 om ( hapl ) 22$^{d}$, T1 damaged for 22$^{d}$–23$^{b}$ —$^{d}$) B3 सका , D9 सकामी B3 वनम् ( for प्रियम् ) V2 3 B2 4 कातावरा कामिनमभ्युपैति, D3 मेघानिकाम परिसपतति, D11 काता स्वकात घनमभ्युपैति

**23** For sequence in Ś1 D12, cf v l 3 and for sequence in B3, cf v l 21 —Ñ V1 B1 D1 2 4 7 13 om 23 ( cf v l 14 and 21 ) T1 damaged for 23$^{ab}$ ( cf v.l 22 ) —$^{a}$) Ś1 घना, D12 om ( for जाता ) V2 3 B2 4 D3 om from शिखिसुप्रनृत्ता up to जाता कदबा in $^{b}$ Ś1 D12 शिखिन प्रमत्ता, B3 °सुप्रवृत्ता, D5 शिखिजुष्ट-वप्रा, T2 M2 Cv °सुप्रलप्ता, T3 G2 Cmp °सुप्रलापा, G1 M1 3 Cg °सप्रनत्ता, G3 °स्प्रणर्ता, Cr °सप्रलुप्त (sic), Ck t as in text ( for शिखिसुप्रनृत्ता ) ❀ Cv शिखिसुप्रलापा मयूरनादिता अन्तर्भावितण्यर्थ । भावे निष्ठान्तस्य बहुव्रीहिर्वा ।, Cm शिखिसुप्रलापा इति पाठ । शिखिना मयूराणा सुप्रलापा येषु ते तथोक्ता ।, Cg शिखिभि सप्रनृत्त येषु ते तथोक्ता ।, Ck शिखिसुप्रनृत्ता इति मत्वर्थीयश्चाजन्त ❀ $^{b}$) D3 सुकदन- —$^{c}$) Ś1 D12 वृषाकेषु ( for वृषा गोषु ) and नम्रा ( for -कामा )

वहन्ति वर्षन्ति नदन्ति भान्ति
ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः
प्रियाविहीनाः शिखिनः प्लवंगाः ॥ २४
प्रहर्षिताः केतकपुष्पगन्ध-
माघ्राय हृष्टा वननिर्झरेषु ।
प्रपातशब्दाकुलिता गजेन्द्राः
सार्धं मयूरैः समदा नदन्ति ॥ २५
धारानिपातैरभिहन्यमानाः
कदम्बशाखासु विलम्बमानाः ।
क्षणार्जितं पुष्परसावगाढं
शनैर्मदं षट्चरणास्त्यजन्ति ॥ २६
अङ्गारचूर्णोत्करसंनिकाशैः
फलैः सुपर्याप्तरसैः समृद्धैः ।
जम्बूद्रुमाणां प्रविभान्ति शाखा
निलीयमाना इव षट्पदौघैः ॥ २७
तडित्पताकाभिरलंकृताना-
मुदीर्णगम्भीरमहारवाणाम् ।
विभान्ति रूपाणि बलाहकानां
रणोद्यतानामिव वारणानाम् ॥ २८

24 For sequence in Ś1 D12, cf v l 3 and for sequence in B3, cf v l 21 —Ñ V1 B1 D1 2 4 13 om 24 (cf v l 14 and 21) D7 reads 24 after $2^{ab}$ —$^{a}$) D3 9 पत्र (D9 गध) विकर्षति (for वहन्ति वर्षन्ति) —$^{b}$) V2 3 B2 मुह्यति, B3 युध्यति, D11 प्रध्यति (for ध्यायन्ति) B2 समाश्रुवति, D6 समाश्लिपति, M1 समाह्वयति (for समाश्वसन्ति) —T1 damaged from वनाता. up to $25^{b}$ —$^{c}$) V2 D3 वनस्था Ś1 D12 सुघोपणा शातरजा वनातात् —V3 illeg for $24^{d}$–$32^{d}$ —$^{d}$) V2 B2–4 D8 11 -वियुक्ता॰ (for -विहीना) Ś1 D12 प्लवते, D8–11 G2 Ct प्लवगमा, G3 प्रयाता, Cg as in text (for प्लवगा) ❀ Cr : अत्र प्लवगशब्दो वानरवाची ❀

25 Ś1 Ñ B1 D1 2 4 12 13 om 25 (cf v l 3 and 14) For sequence in B3, cf v l 21 V3 illeg. for 25, T1 damaged for $25^{ab}$ (for both cf. v l 24). D7 om 25–31 —$^{a}$) V2 मिश्रम्, B3 -गधान् (for -गन्धम्) V1 D11 -पुष्पगधान्, D3 -गधपुष्पान्, D5 -पुष्पमतम् (for -पुष्पगन्धम्) D5 8–10 मत्ता, Cg as in text (for हृष्टा) V2 B2 4 गिरिगह्वरेषु, B3 गिरिकदरेषु (for वननिर्झरेषु) —V2 B2 4 om $25^{c}$.—$^{c}$) V1 D11 प्रयाति, B3 प्रजात, D9 प्रवात-, G3 प्रवात-, M3 प्रसाद-, Cg k t as in text (for प्रपात) B3 [अ]गदिता (for -[आ]कुलिता) —$^{d}$) V2 B2 प्रमदा (for स°) B3 मुखै सप्रमदा (for मयूरै समदा)

26 For sequence in Ś1 D12, cf v l 3 and for sequence in B3, cf v l 21 —Ñ B1 D1 2 4 7 13 om, V3 illeg for 26 (cf v l 14, 24 and 25) —$^{a}$) Ś1 अभिहित्यमाना, V2 अभिरम्यमाना (both sic), D12 अभिदयमाना (for अभिहन्यमाना) —$^{b}$) V1 विलवमान (sic) —T1 damaged for $26^{c}$–$27^{a}$ —$^{c}$) V2 B2 4 पुष्परसावगूढ, D3 11 °रसाभिगाढ —After $26^{c}$, Ś1 D12 ins

537* लीलाविलासो परमे युवान ।

—$^{d}$) D6 मुद (for मद) D11 पिबति, M1 दिशति (for त्यजन्ति) D8 शनैर्मुद षट्चरणा पिबति

27 For sequence in Ś1 D12, cf v l 3 and for sequence in B3, cf v l 21 Ñ B1 D1 2 4 7 13 om, V3 illeg for 27 (cf. v l 14, 24 and 25) T1 damaged for $27^{ab}$ (cf. v l 26) D8 reads 27–30 after 541(A)* —$^{ab}$) G1 इगाल- (for अङ्गार-) Ś1 D12 G2 -पूर्णोत्कर, V1 -चूतोकर-, B2–4 -वाणोत्कर- (for -चूर्णोत्कर-) Ś1 D12 -सनिकाश V2 पर, B2 in marg (for फलै) V1 च .. विमलै (for सनिकाशै॰ फलै॰) B2 सुगंधै, B3 G1 समृद्धा, D3 11 प्रवृद्धै॰, G2 समया (sic) (for समृद्धै.) ❀ Cr अङ्गारचूर्णोत्करसनिकाशैरित्यत्राङ्गारशब्द शान्ताङ्गारवाची। अन्यथा षट्पदौघसाम्य न स्यात्।, Cm अङ्गारेति। अत्राङ्गारशब्द शान्ताङ्गारवाची।, Ct अङ्गार शान्ताग्निस्तच्चूर्णस्य य उत्करस्तत्समै ❀ —$^{c}$) V1 D6 G1 प्रतिभाति, V2 B2.4 च विभाति, D12 प्रति** (for प्रविभान्ति) —V2 om $27^{d}$ —$^{d}$) V1 B2 4 D3 5 8–11 निपीय°, B3 निनीय° (for निलीयमाना) D8–11 षट्पदोघै —After 27, V1 reads 18 and 20, while B3 ins (sic)

538* सुफलनिकरशोभतेति नीलो
सुस्फितस्थित इव गणो नि स्वनषट्पदानाम्।
जनानि सर्वाण्यपहारयित्वा
तृप्ता नवप्रावृषि पूर्णचेता ।

28 For sequence in Ś1 D12, cf v l 3 —Ñ B1 D1 2 4 7 13 om, V3 illeg for 28 (cf v l 14, 24 and 25) V1 om from $28^{a}$ up to l 4 of 540* —$^{a}$) V2 तनित् (sic) —$^{b}$) V2 B2–4 -गाम्भीर्य- (for -गम्भीर-) Ś1 D12 G1 M2 -महार्णवाना (for -महारवाणाम्) —T1 damaged for $28^{cd}$ —$^{cd}$) D5 8–10 T2 3 -[उ]त्सुकानाम् (for -[उ]द्यतानाम्) Ś1 V2 G2 वानराणा, T2 वारणा (sic), G1 कुजराणा (for वारणानाम्) B3 श्रुत्वा निनाद समदोत्कटाना बलाहकाना समदोत्कटाना.

मार्गानुगः शैलवनानुसारी
संप्रस्थितो मेघरवं निशम्य ।
युद्धाभिकामः प्रतिनागशङ्की
मत्तो गजेन्द्रः प्रतिसंनिवृत्तः ॥ २९

मुक्तासकाशं सलिलं पतद्वै
सुनिर्मलं पत्रपुटेषु लग्नम् ।
हृष्टा विवर्णच्छदना विहंगाः
सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥ ३० G 4 0 0 B 4 28.35 L 4.21 38

29 For sequence in Ś1 D12, cf v l 3 —Ñ B1 V1 D1 2 4 7 13 om 29 (cf v l 14, 25 and 28) V3 illeg for 29 (cf v l 24) —a) V2 मार्गानुगत (hypm), B2 4 D3 11 मार्गागतं (D3 °त), B3 मार्गणे* (for मार्गानुग) V2 B2-4 -वना (B3 रसा) नुचारी (for -वनानुसारी) —b) V2 B2 4 सप्रस्थित (for °तो) —c) Ś1 जलाभिकाम, V2 B2 4 °राम, B3 °लापी, D3 11 °काक्षी, D12 +दितिकाम (for युद्धाभिकाम) Ś1 D12 प्रतिनागशका, B3 4 D5 6 8-10 T G2 3 °नादशकी (D10 °का) —d) D11 गजेंद्र V2 सान्वृत्त, B3 -सप्रवृत्त (for -सनिवृत्त) —After 29, V2 B2-4 D3 5 6 8-11 S ins

539* क्वचित्प्रगीता इव षट्पदौघैः
क्वचित्प्रनृत्ता इव नीलकण्ठैः ।
क्वचित्प्रमत्ता इव वारणेन्द्रै-
र्विभान्त्यनेकाश्रयिणो वनान्ताः ।
कदम्बसर्जार्जुनकन्दलाढ्या
वनान्तभूमिर्नववारिपूर्णा ।
मयूरमत्ताभिरुतप्रनृत्तै-
रापानभूमिप्रतिमा विभाति ।

[(l 1) D6 8 9 11 षट्पदोघै B3 नानासुगधीकृतवातपूर्णा —(l 2) D3 प्रगीता, D11 प्रसक्ता, G3 प्रणर्ता (for प्रनृत्ता) B4 इह (for इव) D3 11 कठसक्तै (for नीलकण्ठै) B3 नृत्यत्यनेकाप्रनमा वनाता —B3 om (hapl) l 3-4, T1 damaged for l 3-6 —(l 3) B2 4 प्रवृत्ता, D6 11 G1 M2 च मत्ता (for प्रमत्ता) V2 B2 4 D11 वानरेंद्रैर् (for वारणेन्द्रैर्) —(l. 4) V2 B2 4 [अ]नेकप्रभया, D3 [अ]नेकक्रियया, D5 M3 अनेकाश्रयणा (M3 °णो), D11 °कृतयो, M2 °ग्रयिणो (for [अ]नेकाश्रयिणो) —(l 5) V2 B2-4 -कर्णिकारैर्, D3 11 -कर्णपूरा, D8-10 -कदलाद्या (for -कन्दलाढ्या) —(l 6) D8-10 Cr m t मधु (for नव-) M3 -राहि- (sic) (for -वारि-) V2 B2 4 -युक्ता, B3 -पिक्त, D3 11 -मिक्ता (for -पूर्णा) —(l 7) D3 11 -केका, M1 नृत्ता- (for -मत्ता-) D6 -[अ]भिरुत- V2 -प्रनृत्यै, B2-4 D6 -प्रवृत्तैर्, G3 -प्रणर्तैर् (for -प्रनृत्तैर्) ]

30 For sequence in Ś1 D12, cf v l 3 —Ñ V1 B1 D1 2 4 7 13 om 30 (cf v l 14, 25 and 28) V3 illeg for 30 (cf v l 24) D9 repeats 30ab after 30cd —a) Ś1 सकाम, V2 B2-4 D3 11 G3 -प्रकाश, D5 8-10 -समाभ, Cm as in text (for -सकाश) Ś1 B2 3 D3 12 पतत, V2 B4 पतत , D11 पतच्च (for पतद्वै) —b) V2 पद्म-, B2 4 पर्ण , D11 चचु- (for पत्र-) Ś1 पर्वतसानु-, D12 lacuna (for पत्रपुटेषु) —After 30ab, B3 reads 21c-27 and om from 30c up to l 4 of 540* —B4 om 30c —c) V2 B2 विकीर्णाच् (for विवर्णच्) —T1 partly damaged from 30d up to l 2 of 540* —d) D3 पतति (for पिबन्ति) —After 30, V2 B2 4 D3 5 6 8-10 S ins, V1 ins l 5-8 after 16, while B3 ins l 5-8 and l 11-14 after 30ab

540* षट्पादतन्त्रीमधुराभिधानं
प्लवगमोदीरितकण्ठतालम् ।
आविष्कृतं मेघमृदङ्गनादै-
र्वनेषु संगीतमिव प्रवृत्तम् ।
क्वचित्प्रनृत्तैः क्वचिदुन्नदद्भिः
क्वचिच्च वृक्षाग्रनिषण्णकायैः ।
व्यालम्बबर्हाभरणैर्मयूरै-
र्वनेषु संगीतमिव प्रवृत्तम् ।
स्वनैर्घनानां प्लवगाः प्रबुद्धा
विहाय निद्रां चिरसंनिरुद्धाम् ।
अनेकरूपाकृतिवर्णनादा
नवाम्बुधाराभिहता नदन्ति ।
नद्यः समुद्वाहितचक्रवाका-
स्तटानि शीर्णान्यपवाहयित्वा ।
दृप्ता नवप्राभृतपूर्णभोगा
द्रुतं स्वभर्तारमुपोपयन्ति ।

[T1 damaged for l 1-2 —(l 1) V2 [अ]भिराम, G3 °नाद (for °धान) —(l 2) V2 प्राणादल, B2 प्राणोदन, B4 प्रणोदित- (for प्लवगम-) D6 11 M1 Cr k -कर्णनाल, Cv m g t as above (for -कण्ठतालम्) —(l 3) D3 11 आवि कृत (for आविष्कृत) —G2 om (hapl) l 5-8 —(l 5) V1 प्रकाश, V2 प्रन्यत्यै (sic), B2 4 D9 M1 प्रवृत्त, B3 D5 G3 प्रमत्तै (for प्रनृत्तै) V1 2 G1 3 उन्नमद्भि, D11 उत्पतद्भि (for उन्नदद्भि) —(l 6) V1 D11 -निपातवद्भि, B3 -निशतुकामै, D9 निषक्त° (for -निषण्णकाय) —(l 7) D6 M1 व्यालनि-, G1 व्यालोल- (for व्यालम्ब-) D10 -वर्षा- (for -बर्हा-) V1 क्वचिच्छिखामारणमैयूरर् —(l 8) V2 B2 4 उन्मी (V2 °मू) ल्तितानीव वनातराणि —T1 damaged for l 9-12 —(l 9) G1 वनाना (for घनाना) V2 B2 4 विबु (B4 °वृ) द्धा, D6 प्रवृद्धा, T2 प्ररुद्धा (for प्रबुद्धा) —(l 11) B3 D3 -वर्ण-, (for -रूप-) V2 B2 4 -मर्म (B2 वर्ण, B4 ...) भेदा, B3 -रूपनादा (for -वर्णनादा) —(l 12) D6 वनाबु (meta)-(for नवाम्बु-) D3 नदनि (for नदन्ति) B3 गृहे प्रविष्टा इव विप्रसधा —(l 13) V2 B2 4 समृद्धा कूल-, B3 ममगा°, D5 9 समुत्थापित- (for समुद्वाहित-) —(l 14) V2 B2 4 D3 11

नीलेषु नीला नववारिपूर्णा
मेघेषु मेघाः प्रविभान्ति सक्ताः ।
दवाग्निदग्धेषु दवाग्निदग्धाः
शैलेषु शैला इव बद्धमूलाः ॥ ३१

मत्ता गजेन्द्रा मुदिता गवेन्द्रा
वनेषु विश्रान्ततरा मृगेन्द्राः ।
रम्या नगेन्द्रा निभृता नरेन्द्राः
प्रक्रीडितो वारिधरैः सुरेन्द्रः ॥ ३२

ज(D3 त)लानि जीर्णानि, D5 तदा विशीर्णानि, D6 तटान्यशीर्णानि (for तटानि शीर्णानि) B4 [उ]पवाहयित्वा, G3 [अ]पटाययित्वा (for [अ]पवाह°) B3 सफेनतोया कलुषैर्वनातै —(l 15) D3 5 11 M3 तृप्ता G M1 नवा (for नव-) D3.11 -प्रावृषि, D5 6 8–10 Cm t -प्रावृत, M1 प्राहृत-, Cv r g k as above (for प्राभृत-) D3 11 M1 -तोया-, D9 -भोगाद् (for -भोगा). V2 B2 4 दृ(B2 तृ)सा नवप्रावृषि तोयपूर्णा —(l 16) V D3 9 10 [आ]दृत, M3 ध्रुव (for द्रुत) V2 सुभर्तारम्, D11 च भर्ता° (for स्वभर्ता°) V2 B2 4 D3 11 G3 इवोपया(B2 4 °य)ति, D6 T2 3 M Cv r g °पयाति (for उपोपयन्ति). ❀ Ck t उपोपयन्ति प्रसमुपोद पादपूरणे इति द्वित्वम्. ❀]
—After 30, B3 reads 21°–27

31 For sequence in Ś1 D12, cf v l. 3. Ñ B1 D1 2 4 7 13 om 31 (cf. v l 14 and 25) V3 illeg for 31 (cf v l 24). V1 reads 31 after l. 5–8 of 540* read after 16 —$^{a}$) V1 2 B2–4 D3 11 बहु-, Cr m g k as in text (for नव-) M3 प्रविभाति सक्ता (for नववारिपूर्णा) T1 damaged after नववारि up to $^{d}$ —$^{b}$) V1 2 B2–4 D5 6 8–12 M2 Ct प्रतिभाति, Cr m.g k प्रविभाति (as in text) V2 B2–4 नीला· (for सक्ता). M3 नववारिपूर्णा (for प्रविभान्ति सक्ता) —$^{c}$) Ś1 V2 B2–4 D3 9 12 दावाग्नि- (for first दवाग्नि-) V1 -दग्धा इव दावदग्धाः —B4 om. from $31^{d}$ up to l 1 of 541* —$^{d}$) D6 T2 -माला· (for -मूला·) —After 31, V2 B2–4 D3 5 6 8–11 S ins

541* प्रहृष्टसनादितबर्हिणानि
सशक्रगोपाकुलशाद्वलानि ।
चरन्ति नीपार्जुनवासितानि
गजा· सुरम्याणि वनान्तराणि ।
नवाम्बुधाराहतकेसराणि
द्रुत परित्यज्य सरोरुहाणि ।
कदम्बपुष्पाणि सकेसराणि
नवानि हृष्टा भ्रमरा पिबन्ति ।

[B4 om l 1 —(l 1) B2 3 प्रकृष्ट, D5 6 8–10 Ct प्रमत्त, Cr g as above (for प्रहृष्ट) D11 -समोदित- V2 -बर्हिणश्च, B2 D3 5 11 -बर्हणानि (for -बर्हिणानि) —(l 2) B3 प्रकीर्ण, M2 सुशक्र (for सशक्र) T1 3 G M1 3 -कोप- (sic), Cv r m t as above (for -गोप) Cv r शाड्वलानि —(l 4) D8 गोपा (for गजा). B4 च रम्याणि (for सुर°) —After l 4, D8 11 ins

541(A)* शैलेन्द्रकूटाकृतिसंनिकाशा
गर्जन्ति मेघा समुदीर्णनादा ।
तडिल्लताचामरकर्णमूला
मत्ता गजेन्द्रा इव सयुगस्था ।
नृत्य मयूरेषु मद वृषेषु
लीला गजेन्द्रेषु मुद खगेषु ।
रतिद्वितीय हृदयेषु काम
निवेशयामास कदम्बवात· ।

—Thereafter D8 reads 27–30. —(l 5) D3.11 घनाम्बु- (for नवाम्बु-). —(l 6) D5 8–10 ध्रुव, D6 नित्य (for द्रुत) V2 B2 3 D5 8–10 M1 2 परिष्वज्य B3 पयोधराणि (for सरोरुहाणि). —T1 damaged for l 7–8 —(l 8) V2 B2 4 वनानि (meta), D3 न चाति-, G3 M1 वनेषु (for नवानि) V2 B2 4 मत्ता (for हृष्टा) V2 D3 T2.3 G2 M पतति (for पिबन्ति) B3 वनानि हृष्टान्यपि सपिबति ]

32 For sequence in Ś1 D12, cf v l 3. Ñ V1 B1 D1 2 4 13 om. 32 (for all except V1 cf v l 14). V3 illeg for 32 (cf. v l 24). —$^{a}$) B3 हरींद्रा, D3 11 वृषेंद्रा (for गवेन्द्रा) —$^{b}$) V2 विक्रातरवा, B2–4 D3 5 7–11 T विक्रात°, G1 M2 विभ्रात°; G3 विश्रातिरता (for विश्रान्ततरा). —B3 om. $32^{cd}$ D3 transp $32^{c}$ and $32^{d}$ —$^{c}$) Ś1 D12 नरेद्रा, D3 गजेद्रा; D9 मृगेद्रा (for नगेन्द्रा). Ś1 D12 निसृता, D5 7 सुखिता, D6 मुदिता, D11 विश्रुता (for निभृता) M1 नगेंद्रा· (for नरेन्द्रा·) —$^{d}$) Ś1 D3 7 12 G1 प्रक्रीडिता (for प्रक्रीडितो). ❀ Cr m g t प्रक्रीडित इति कर्तरि निष्ठा ❀ Ś1 D3 7 12 T2 G1 2 सुरेंद्रा·(T2 G2 sic) V2 क्रीडतो विविधै सुरेद्रा (sic) —After 32, V2 B2 3 (after $32^{ab}$ due to om. of $^{cd}$) 4 D3.5–11 S ins, while V1 cont l 31–32 only after 535*

542* मेघा समुद्भूतसमुद्रनादा
महाजलौघैर्गगनावलम्बा ।
नदीस्तटाकानि सरासि वापी-
र्महीं च कृत्स्नामपवाहयन्ति ।
वर्षप्रवेगा विपुला पतन्ति
प्रवान्ति वाता समुदीर्णघोषा ।
प्रनष्टकूला प्रवहन्ति शीघ्र
नद्यो जल विप्रतिपन्नमार्गा ।
नरैर्नरेन्द्रा इव पर्वतेन्द्रा·
सुरेन्द्रदत्तै पवनोपनीतै ।
घनाम्बुकुम्भैरभिषिच्यमाना
रूप श्रिय स्वामिव दर्शयन्ति ।
घनोपगूढं गगन सतार
न भास्करो दर्शनमभ्युपैति ।

वृत्ता यात्रा नरेन्द्राणां सेना प्रतिनिवर्तते । | वैराणि चैव मार्गाश्च सलिलेन समीकृताः ॥ ३३

G. 4. 27. 8
B 4 28 53
L. 4 21 4

नवैर्जलौघैर्धरणी वितृप्ता
तमोविलिप्ता न दिश प्रकाशा ।
महान्ति कूटानि महीधराणा
धाराभिधौतान्यधिक विभान्ति ।
महाप्रमाणैर्विपुलै प्रपातै-
र्मुक्ताकलापैरिव लम्बमानै ।
शैलोपलप्रस्खलमानवेगा
शैलोत्तमाना विपुला प्रपाता ।
गुहासु सनादितबर्हिणासु
हारा विकीर्यन्त इवावभान्ति ।
शीघ्रप्रवेगा विपुला॰ प्रपाता
निर्धौतशृङ्गोपतला गिरीणाम् ।
मुक्ताकलापप्रतिमा पतन्तो
महागुहोत्सङ्गतलैर्ध्रियन्ते ।
सुरतामर्दविच्छिन्ना स्वर्गस्त्रीहारमौक्तिका ।
पतन्तीवाकुला दिक्षु तोयधारा समन्तत ।
निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजै ।
विकसन्त्या च मालत्या गतोऽस्त ज्ञायते रवि ।

[ (l 1) V2 B2 मेघै (for मेघा) D5 समुद्धयात-, D9 10 G M Ck समुद्भूत-, Ct as above (for °द्भूत-) —(l 2) V2 B2 4 G2 3 M2 -[अ]मिलवा, B3 -[अ]मिरम्यै (for -[अ]वलम्बा) D3 महाजलौघेन नगावल्बा —T1 damaged from रात्ति in l 3 up to समुदीर्ण in l 6 —(l 3) D3 नद्यस्, G1 नदीं (for नदीस्) B2 3 D3.11 तटागानि (for तटाकानि). B3 D3 वाप्यो, B4 वापीं (for वापीर्) —(l 4) V2 B2 4 अभिवर्षतीव B3 अमित प्रपूज्य, D3 11 G2 M2 Cvp rp अभि(D3 °पि)त(Cvp °स)र्पयति, D5 परिवादयति, T2 3 उप°, G3 अभिपूरयति, Cv r m g k t as above (for अपवाहयन्ति) —(l 5) V2 B2 4 आवर्षवेगा, D3 G2 °वेका, D5 वर्षा°, Cm g t as above (for वर्षप्रवेगा) —(l 6) B3 वाता प्रवाता (for प्रवान्ति वाता) V2 B2.4 -नादा, B3 D5 8–10 -वेगा, D3 -दोषा (for -घोषा) —(l 7) D6 T1 3 G1 M1 3 प्रणष्ट- (for प्रनष्ट) D3 11 कूल्, D5 मूला (for -कूला) B3 नष्टप्रकूला न विभाति वाप्यो —(l 8) V2 B2 4 T G2 M3 जलैर् (for जल) B3 नद्यो जलैश्चापि विकीर्णरोधा, D6 नद्यो जलानि प्रतिपन्नमार्गा —(l 9) V2 वलैर्, B2 वनैर्, B3 नगैर् (for नरैर्) —(l 10) B3 महेंद्र- (for सुरेन्द्र-) B(ed) -नीते (for -दत्ते) —(l 11) B2 नवाबु, B4 मेघाबु, D3 11 धाराबु- (for घनाम्बु-) D6 अभिसिच्यमाना (for अभिषिच्य°) —T1 damaged from l 12 up to जलौ in l 15 —(l 12) V2 B3 4 D3 5 G1 रूप- (for रूप) V2 B2 4 माम् (for स्वाम्) —B3 om l 13–16 —(l 13) V2 B2 4 समनात्, D3 11 सचद्र, D8–10 न तारा (for सतार) —V2 B2 4 om l 14–22 —D9 om. from वितृप्ता in l 15 up to महाप्रमाणै in l 19 —(l 15) D3 11 विलुप्ता, T2 [इ]व तृप्ता (for वितृप्ता) —(l 16) D3 T1 तमोवलिप्ता, D5 °चिछिप्ता (sic), D11 ततो विलुप्ता, G1 °विलुप्तास् (for तमोविलिप्ता) G1 च (for न) —(l 18) B3 कराबुधौतानि, D5 8 10 धाराविधौतानि —(l 19) B3 महेंद्रकपैर् (for महाप्रमाणैर्) D3 विपुल- (for विपुलै) B3 प्रजातैर् —T1 damaged from l 21 up to इवाव in l 24 —(l 21) T2 शैलोपरि-, G2 शृगोपल, M1 शैलोपमा (for शैलोपल-) B3 शृगोपशृगानसमानवेगै, D3 11 शृगोपलप्रस्खलमानवेगे —(l 22) D3 11 विपुले प्रपातै (for °ला प्रपाता) —(l 23) V2 B2 4 दिशासु (for गुहासु) V2 यन्नादित- (for स°) D3 5 11 -बर्हणासु —(l 24) B3 तारा (for हारा) G3 व्यकीर्यत (for विकी°) V2 B2–4 D3 M2 [आ]पतति, D5 M1 [आ]विभाति, G2 3 [अ]भिभाति (for [अ]वभान्ति) —B3 om l 25 —(l 25) D8–10 G3 शीघ्र (for शीघ्र-) D3 11 प्रवला (for विपुला) —(l 26) V2 D3 6 11 T2 3 G M1 निर्धृत-, B2 निस्रौत-, B3 निर्धर्ष (for निर्धौत-) V2 B2 4 शृगोपतना, B3 शृगोपनिभा, D5 शृगोप्रहता, T3 शृगोपतटा, G1 2 M1 2 शृगोपलका (G2 M1 °ता) (for शृङ्गोपतला) —(l 27) D6 -प्रतिम B2–4 D5 पतनि (for पतन्तो) —(l 28) M1 -गुणोत्सग- (for गुहो°) V2 B2–4 G M2 वरैर् (for तलैर्). B2 नदद्भि, B3 श्रियते (for ध्रियन्ते) D3 11 महागुहाभि स यदि भ्रियते —For l 28, B2 subst

542(A)* महागुहोत्सङ्गवरैर्नदद्भि
प्रपूर्यमाणा ध्रियते सम तत् । ,

—After l 28, V2 B2[after 542(A)*] 4 read 10
—After l 28, B3 ins. (sic)

542(B)* घनाधिवासे सनदित्प्रकाशे
गर्जन्ति जम्बूतरुपक्वफलप्रकाशे ।
मेघातिरक्तवती हृदयान्धकारो
येषा घनेन सहसोत्पतितैर्मयूरै ।
सवीज्यते मणिमयैरिव तालवृन्तै

—V2 B2–4 om l 29–32 —(l 29) T1 damaged from स्वर्ग- up to मानै in l 31 D3 11 -पक्तय (for -मौक्तिका) —(l 30) D5 6 8–10 पतति चातु (D5 चाकु, D6 व्याकु)ला D3 11 तोयधारा निलाहता (metri causa) (for the post half) —(l 31) V1 D3 प्रलीय, D5 8 10 11 T2 G1 विलीय, D9 विलीन- (for निलीय-) D3 11 च खगै (for विहगैर्) V1 D3 11 समीलद्भिश् (for नि°) —(l 32) V1 D3 11 ज्ञायतेस्तगतो रवि (for the post half) ]
—Thereafter D3 11 read 13

33 For sequence in Ś1 D12, cf v l 3 Ñ1 D1–4 11 (D3 11 repeat 33 here) 13 read 33 (all except D3 followed by 544*) after 3 V1 3 read 33 after 13, while B3 reads 33–36 after 13 —ᵃ) Ś1 D2 4 12 जातु, V1 3 B1–3 यतो, V2 B4 यान, D1 7 याता, D11 (first time यातु) व्रता, D13 यातु (for वृत्ता) ❀ Ct वृत्ता निवृत्ता । वृत्ता इति पाठेऽप्ययमेवार्थ ❀ B1 3 याता (for यात्रा).

मासि प्रौष्ठपदे ब्रह्म ब्राह्मणानां विवक्षताम् ।
अयमध्यायसमयः सामगानामुपस्थितः ॥ ३४
निवृत्तकर्मायतनो नूनं संचितसंचयः ।
आषाढीमभ्युपगतो भरतः कोसलाधिपः ॥ ३५
नूनमापूर्यमाणायाः सरय्वा वर्धते रयः ।
मां समीक्ष्य समायान्तमयोध्याया इव स्वनः ॥ ३६
इमाः स्फीतगुणा वर्षाः सुग्रीवः सुखमश्नुते ।
विजितारिः सदारश्च राज्ये महति च स्थितः ॥ ३७
अहं तु हृतदारश्च राज्याच्च महतश्च्युतः ।
नदीकूलमिव क्लिन्नमवसीदामि लक्ष्मण ॥ ३८

Ñ1 . त (illeg), D3 (first time) यत्र यत्र (for वृत्ता यात्रा) Ñ2 सयता वानरेन्द्राणा —$^{b}$) V B2–4 प्रतिनिवर्तिता (V2 B4 °नी) (for °निवर्तते) Ś1 Ñ1 D1 2 4 12 13 लोके (D1 काले) स्मिन् प्रवर्तते, Ñ2 B1 D7 सेना प्रतिनिवर्तिता', D3 11 (both first time) कालेस्मिन्वि (D11 °न्वे) निवर्तते, D8–10 Ck t सेना पथ्येव वर्तते —After 33$^{ab}$ (second time), D3 11 ins

543* मुक्तयुद्धबला' सर्वे त्रिवर्गमुपभुज्यते ।
[D11 उपभुजते (for °भुज्यते)]

—$^{c}$) V2 दुर्गाणि (for वैराणि) B1 3 D7 हि (for [ए]व) Ś1 Ñ1 D1–4 11–13 मार्गाश्च सह वैरेण (D11 शैलेन) —$^{d}$) V2 B4 निवारि (B4 °चि) ता (for समीकृता) Ś1 D12 सलिलैर्विषमीकृता' —After 33, Ś1 Ñ V B1 2 3 (repeats after 36) 4 D1 2 4 7 11 (after 33 first time) 12 13 ins

544* घनं समुदितो रुद्धो दीनरूप प्रकाशते ।
सूर्य' प्रनष्टो धर्मज्ञ शोकेनाहमिवावृत ।

[(l 1) Ñ1 illeg from समुदितो up to प्र Ś1 Ñ2 D7 12 समुदितं, B1 समुदितो Ś1 om., D2 [s]प्युद्यो (for रुद्धो) D1 समु . द्धो V2 B4 दीनरश्मि, D1 दीनो वीर, D2 4 13 दीनो पे न (for दीनरूप) B3 (second time) नीलरूप स दृश्यते (for the post. half). —(l 2) D4 11 प्रविष्टे (for प्रनष्टो) Ś1 Ñ1 V2 B4 D11 12 धर्मात्मा (for धर्मज्ञ) B3 (second time) गतप्रकाश मयीव (for the prior half) ]

—Thereafter V1 3 read 4–5

34 For sequence in Ś1 D12, cf v l 3 and for sequence in B3, cf v l 33. ☞ V3 illeg from 34 up to किष्किंधा in 4 30 26$^{d}$ D3 11 transp 34 ($^{ab}$ and $^{cd}$ transp) and 35 T1 damaged for 34 —$^{a}$) D5 M प्रोष्ट-, Ct as in text (for प्रौष्ठ-) D3 11 प्रासे, D5 6 T2 सौम्य (for ब्रह्म) Ś1 Ñ1 D12 प्रोष्ठपादश्च गोपाना, Ñ2 V1 2 B D7 मास प्रौष्ठपदो रम्यो, D1 प्रौष्ठपादप्रगेयाना, D2 4 13 प्रोष्ठपादजिनेयाना —Ñ1 illeg from $^{b}$ up to अयम in $^{c}$ —$^{b}$) Ś1 D1 4 12 मासो ब्रह्म, B1 दक्षिणाना, D2 13 कालो ब्रह्म, D11 ब्राह्मणैश्च (for ब्राह्मणाना) Ś1 D12 द्विवा (Ś1 °व) -श्रिता, D3 तपस्विना, D11 तपस्विभि, G2 M1 अ नीयता (for विवक्षताम्) —$^{c}$) Ñ2 V1 2 B1 2 4 D7 स्वाध्याय-, D1 व्यास (for अध्याय) —$^{d}$) D5 अवस्थित (for उपस्थित)

35 Ś1 D12 om 35 For sequence in B3, cf v l 33 V2 om (hapl) 35–37 D3 11 transp 34 ($^{ab}$ and $^{cd}$ transp) and 35 —$^{a}$) D10 T1 G विवृत्त-, Cv r m g t as in text (for निवृत्त-) Ñ2 B4 -कर्मातपनो, B1 3 °प्रयतो, D1 °यततो, D2 4 13 -कार्यायतनो (for -कर्मायतनो) ❀ Ck निवृत्तिकर्मेक वर्षवशान्निरुद्धप्रवृत्तिनिवृत्तिकर्मायतन राजधानी यस्य स तथा ❀ —Ñ1 partly illeg for 35$^{b}$ —$^{b}$) D3 M3 -संशय (for -संचय') D2 4 13 संचयसंचित (by transp) —$^{c}$) T3 अप्युपगतो Ñ1 आ*प्रत्ययगतो (illeg), B1 3 आषाढीमुपयातोत्र, D2 4 13 आषाढाप्रत्युपगतो —$^{d}$) Ñ1 G1 कौसलाधिप, M1 कोसलेश्वर.

36 For sequence in Ś1 D12, cf v l 3 and for sequence in B3 cf v l 33 V2 om 36 (cf v l. 35). —$^{a}$) Ś1 D12 सपूर्य-, D5 6 आपूर्ण- (for आपूर्य-) —$^{b}$) Ñ2 B1 3.4 D3 7 T2 रव, V1 ध्वनि (for रय) Ś1 शरद श्रूयते स्वना (sic), Ñ1 illeg, B2 सर. प्रावर्तते रव, D1 सरव्य श्रूयते स्वन, D2 4 12 13 सरय्वा श्रूयते ध्वनि (D12 स्वन) —T1 damaged for 36$^{c}$–37$^{b}$ —$^{c}$) Ñ2 V1 B D3 7 11 वन (for समा) Ś1 D12 मामप्रेक्ष्य वने यात, D1 मा प्रेक्ष्य हि *ने याहि, D13 मा प्रेक्ष्य वचने याति (sic) —$^{d}$) Ś1 V1 D1 2 4 5 8–10 12 13 Ck अयोध्यायाम् (for °ध्याया) D2 4 द्रुत (for स्वन) —After 36, B3 repeats 544*

37 For sequence in Ś1 D12, cf v l 3 V2 om 37 (cf v l 35) T1 damaged for 37$^{ab}$ (cf v l 36) —$^{a}$) Ś1 D12 इमा स्फी (Ś1 श्री) तगुणा वर्षां, D2 4 13 इमामथ (D13 °य) गुणोपेता ❀ Cg वर्षा इत्यत्यन्तसयोगे द्वितीया।, Ck t वर्षाश्च (Ck °श्चेति) विस्तीर्ण इत्यनुकर्षे ❀ —$^{b}$) Ś1 D12 च सुखे (D12 °खी) स्थित, Ñ1 D1 2 4 13 समुपाम (D2 13 °श्नु) ते, Ñ2 V1 B D7 सुखमेधते (for सुखमश्नुते) —$^{c}$) D3 सदाचार (for सदारश्च) Ś1 D12 जितारिरेष सुग्रीवो, Ñ1 D1 4 जितारि ससहायश्च, D2 13 जिताश ससहायश्च —$^{d}$) Ś1 Ñ2 V1 B D1 7 12 च महति (by transp), Ñ1 illeg (for महति च) D2 4 13 स्वराज्ये महति स्थित —After 37, D7 ins

545* सीमोपसदर्शितमेखलाना
नदीवधूना गतयोऽथ मन्दा ।
कान्तोपभुक्तालसगामिनीना
प्रभातकालेष्विव कामिनीनाम् ।

38 Ñ1 illeg for 38$^{ab}$ —$^{a}$) Ś1 D2 4 12 13 हि, B1 2 D1 च (for तु) Ñ2 B2 कृत- (for हृत) —D4 om (hapl ?) from महतश्च in $^{b}$ up to वर्षाश्च in 39$^{b}$ —$^{b}$)

शोकश्च मम विस्तीर्णो वर्षाश्च भृशदुर्गमाः ।
रावणश्च महाञ्शत्रुरपारं प्रतिभाति मे ॥ ३९
अयात्रां चैव दृष्ट्वेमां मार्गांश्च भृशदुर्गमान् ।
प्रणते चैव सुग्रीवे न मया किंचिदीरितम् ॥ ४०
अपि चातिपरिक्लिष्टं चिराद्दारैः समागतम् ।
आत्मकार्यगरीयस्त्वाद्वक्तुं नेच्छामि वानरम् ॥ ४१
स्वयमेव हि विश्रम्य ज्ञात्वा कालमुपागतम् ।
उपकारं च सुग्रीवो वेत्स्यते नात्र संशयः ॥ ४२
तस्मात्कालप्रतीक्षोऽहं स्थितोऽस्मि शुभलक्षण ।
सुग्रीवस्य नदीनां च प्रसादमनुपालयन् ॥ ४३

G 4 27 19
B 4 28 63
L 4 21 47

D3 11 [ए]व परिच्युत. (for महतश्च्युत) —c) D1 G2 3 क्लिष्टम् (for क्लिन्नम्) ❀ Ck नदीकूलमिति । कर्तृ । So also Ct ❀ —d) D11 अथ (for अव-)

39 D4 om up to वर्षाश्च in b (cf v l 38) —a) Ś1 Ñ1 D1 2 12 13 सागरश्च हि (Ñ1 सु-), Ñ2 V1 B1–3 D3 7 11 सागरश्चापि (D11 °ति-) (for शोकश्च मम) —T1 damaged for 39bcd —b) Ś1 Ñ1 D12 13 मार्गश्च, D1 2 मार्गाश्च, D3 11 पथानो (for वर्षाश्च) G3 मम (for भृश-) Ś1 Ñ1 D12 13 -दुर्गम —After 39ab, D9 reads erroneously 40cd for the first time repeating it in its proper place —D9 om. 39cd —c) D3 11 पुर (for महान्) —d) Ś1 D12 असाध्य, Ñ1 D1 2 4 13 अहार्य, Ñ2 V1 2 B D6–8 10 G1 2 M1 Ct अपार, D5 T2 अवार्य, Cm g as in text (for अपार) B4 मा, G3 M1 मा (for मे)

40 a) Ś1 D12 अयात्र, B1 आयता, D6 अयात्राश्, M3 आयताश् (for अयात्रा). D11 [इ]ह, G1 M2 [अ]पि (for [ए]व) Ś1 V2 D12 दृष्ट्वा मा, Ñ1 दृष्ट्वा न, D3 11 दृष्ट्वा मे, D5 दृष्टुं (sic) मा (for दृष्ट्वेमा) D1 अयात्रा चेह दृष्टा न —b) D6 मासाश् (for मार्गांश्) Ś1 D12 सागर चैव दुर्गम, Ñ1 D1 सागरश्चातिदुस्तर (D1 °गम), Ñ2 V1 2 B D3 7 11 सागरस्य च दुर्ग(B2 मूर्त)ता, D2 4 13 सागर च सुदुस्तर(D4 °गम) —D9 repeats 40cd (cf v l 39) —c) Ś1 D12 प्रमत्त, Ñ1 प्रणतश्, D2 4 13 प्रमत्ते, D3 11 प्रणयान्, M2 वृणुते (for प्रणते) Ś1 Ñ V1 2 B D1 4 7 12 13 G3 चापि, D2 वापि, D3 11 नापि (for चैव) Ś1 D12 सुग्रीव, Ñ1 D3 11 M2 सुग्रीवो (for सुग्रीवे) —d) Ś1 D2 4 12 13 मया किं साध्यमेव हि, Ñ1 D1 मया किं वाच्यमस्ति हि, Ñ2 V1 2 B D7 न किंचिद्व्याहृत मया, D3 11 मया किंचिदुदाहृत

41 a) Ñ2 अति (for अपि) Ñ1 D1 2 4 13 चासौ, V1 2 B2 4 D5 6 8–10 Ct चापि, D3 वालि-, M3 चात्र (for चाति-) Ś1 D12 अपि चैवारिणा क्लिष्टश् —b) B2 विना (for चिराद्) Ś1 Ñ1 D1 2 4 12 13 G2 समागत (for °तम्) —c) B2 -वीर्य, D5 M2 -कार्यं (for -कार्य-) V1 -गरीयस्त्व (for -गरीयस्त्वाद्) ❀ Cv वक्तु नियोक्तुमात्मकार्ये गरीयस्यपि मोतिपरिक्लिष्टाश्चिराद्दारै समागत इति कृत्वा न तत्र त नियोजितवानित्यर्थ (sic) ।, Cr m वक्तु नियोक्तु नेच्छामीति भूतार्थे (Cm भूते) लट् ।, अपि चातिपरिक्लिष्टश्चिराद्दारै (Cm °परिक्लिष्टो दारै) समागत इति प्रथमान्तपाठे इतिकरण द्रष्टव्यम् ।, Cg वक्तु नियोक्तु नेच्छामीति भूतार्थे लट् ।, Ck नेच्छामि । नैच्छम् ।, Ct नेच्छामि नैषिषम् ❀ —d) D1 साप्रत, D6 चातर (for वानरम्) —After 41, Ś1 D1 2 4 12 13 ins

546* स दु खाद् खितो नूनं सुग्रीव सुखितोऽपि सन् ।
अकाले तादृश मित्र नाह दु खे नियोजये ।

[ (l 1) Ś1 सुदु खाद D13 स दु खदु खितो नून (for the prior half) Ś1 सुखितोथ सन्, D2 सुहितोपि यत्, D4 13 सहि (D4 सुखि)तो हि यत् (for सुखितोऽपि सन्) —After l 1, D1 reads erroneously 42c —(l 2) Ś1 D12 नाल (for नाह) ]

42 T1 damaged up to वेत्स्यते in d —a) M1 अयम् (for स्वयम्) Ś1 Ñ1 D1 2 4 12 विनिश्चित्य, D5 7 G2 हि विश्राम्य, D13 हि निश्चित्य, G(ed) हि विश्वस्य (for हि विश्रम्य) —b) Ś1 Ñ V1 2 B D1–4 7 11–13 उपस्थित (for उपागतम्) —c) D2 13 उपकार्यं, T3 उपकारश् (for °कार) D1 11 तु (for च) —d) Ś1 Ñ1 D1 2 4 12 13 ज्ञास्यते, Ñ2 D7 वेक्षते (for वेत्स्यते) —After 42, Ś1 D1 2 4 11–13 ins

547* यथा वालिवधे साह्य सुग्रीवस्य मया कृतम् ।
तथा सीताधिगमने मत्साहाय्यमुपेष्यति ।

[ (l 2) D11 13 -[अ]भि- (for -[अ]धि-) D1 तथा स सीताधिगमे (for the prior half) D1 यत् (for मत्) D11 स सहाय्यम् D4 उपेष्यते, D13 उपै° (उपेष्यति) ]

43 Ś1 Ñ1 D1 2 4 12 13 transp 43 and 44 (including star passage) —a) D3 6 11 T3 -प्रतीक्ष्यो (sic). —b) D3 11 स्थास्यामि (for स्थितोऽस्मि) —For 43ab, Ś1 Ñ1 D1 2 4 12 13 subst

548* तस्मात्काल हि विश्रम्य स्थितोऽहमिदमुत्तमम् ।

[ Ñ1 D1 तु काल (for काल हि) Ñ1 इमम् (for इदम्) ], while Ñ2 V1 2 B D7 subst for 43ab

549* तस्य सकल्प्य विश्राम स्थाताहमिदमन्तरम् ।

[ B4 विश्वास (for विश्राम) B2 स्थितोऽस्मि शुभलक्षण (for the post half) ]

—d) B1 3 प्रतिज्ञा (for प्रमादम्) Ś1 V1 2 B1 • 4 D2 4 11–13 प्रतिपालयन् (D4 °ये), Ñ B2 D1 3 7 परि°, D5 8–10 अभिकाङ्क्षयन्, G3 अभि° (for अनुपालयन्)

उपकारेण वीरो हि प्रतिकारेण युज्यते ।
अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः ॥ ४४
अथैवमुक्तः प्रणिधाय लक्ष्मणः
कृताञ्जलिस्तत्प्रतिपूज्य भाषितम् ।
उवाच रामं स्वभिरामदर्शनं
प्रदर्शयन्दर्शनमात्मनः शुभम् ॥ ४५
यथोक्तमेतत्तव सर्वमीप्सितं
नरेन्द्र कर्ता नचिराद्धरीश्वरः ।
शरत्प्रतीक्षः क्षमतामिमं भवा-
ञ्जलप्रपातं रिपुनिग्रहे धृतः ॥ ४६

इति श्रीरामायणे किष्किन्धाकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

44 Ś1 Ñ1 D1 2 4 12.13 transp 43 and 44 (including star passage) —$^{a}$) D1 M1 युक्तो, D2 4 वैर, D11 धीरो (for वीरो) Ñ2 V1 2 B D7 13 उपकार कृतज्ञेषु Ś1 Ñ V1 2 B4 D3 4 7–10 12 13 प्रतीकारेण, D1 नापकारेण, Cr m g as in text (for प्रति°) V1 सूच्यते (for युज्यते) —After $44^{ab}$, V2 ins

550* सुकृतज्ञोपकारेण युज्यते नात्र संशय ।

—$^{cd}$) Ñ1 partly illeg Ñ2 V1 2 B D7 अकृतज्ञे प्रतिकृत, D1 कृत ह्युपकृत हति, D2 अकृत ह्यप्युपकृत, D3 11 13 अकृतज्ञे ह्युपकृत, D5 अकृतज्ञाप्रतिकृतौ (for $^{c}$) Ñ2 हंति सत्वरता, D1 तस्मात्सत्वरता Ś1 D12 अकृत ह्यपकृत हति लोकेप्वेव (D12 °वा)सता मन (hypm), D4 अकृत ह्यपकृत हंति सेव सत्ववता मन (hypm), L(ed) कृतं ह्यपकृत हति लोकेप्वेवासता मन

45 T1 damaged for $45^{ab}$ —$^{a}$) Ś1 Ñ1 D1–4 11–13 स एवम्, D6 T2 3 G1 3 M Cg तमेवम् (for अथैवम्) D5 उक्त Ś1 D1 12 प्रविचार्य, Ñ1 °धार्य (for प्रणिधाय) —$^{b}$) D1 G3 तं (for तत्) D3 राघव (for भाषितम्) Ñ2 V2 B D7 प्रतिभाषित वच (for प्रतिपूज्य भाषितम्) —$^{c}$) V2 D3 तु, D7 हि (for सु-) Ś1 D2 12 13 प्रतिपूज्यदर्शन, Ñ1 परिपूज्यमानस, D1 प्रतिपद्यदर्शनं, D4 प्रतिदर्शन प्रिय (for स्वभिरामदर्शन) —$^{d}$) V2 निदर्शयन् (for प्र°) B4 शैलमिम् (corrupt), D1 सौहृदम् (for दर्शनम्) B1 सुख (for शुभम्)

46 $^{a}$) D1 5 8–10 यदुक्तम्, Cg as in text (for यथोक्तम्) Ś1 Ñ1 D2 4 12 13 एव (for एतत्) V2 ईदृश (for ईप्सित) Ś1 Ñ V1 2 B D1–4 7 11–13 नचिरेण वानर (for नचिराद्धरीश्वर) —$^{c}$) V1 शरत्प्रभाव, B1–3 D5 7 शरत्प्रतीक्ष, D3 6 शरत्प्रतीक्ष्य Ś1 Ñ1 B2 D1 2 8 12 13 G2 इदं, D7 इमा (for इम) B1 ? जहि (for भवान्) D3 5 6 11 G? M2 transp इम and भवान D4 मतारव्या क्षमता शिवा प्रभो (corrupt) —$^{d}$) Ś1 D1 12 जलप्रमादे(D1 °दो), Ñ1 D2 4 13 जलप्रमाद, Ñ2 V1 2 B3 4 D7 ज(Ñ2 B3 न) हि प्रलाप, B1 न हि प्रलापो, B2 यदि प्रलाप, D9 जल प्रपात, D11 जलप्रताप (for जलप्रपात) Ñ2 परि- (for रिपु-). —D4 illeg from धृत up to वसतो in l 1 of 551* Ñ2 तत, V1 2 B D7 रत, D1 M2 कृत, D9 11 स्थित, D5 घृत (for धृत) —After 46, Ś1 Ñ V2 B D1–4 7 11–13 ins

551* ततोऽस्य तस्मिन्वसतो महागिरौ
महात्मनश्चिन्तयतो हृता प्रियाम् ।
विसृज्य तोय जलदा महाजवा
पुनर्निवृत्ता शरद निवेद्य च ।

[ (l 1) D4 illeg up to वसतो Ñ2 B D7 तथापि (for ततोऽस्य) Ś1 Ñ1 D1–4 11–13 महावने V2 तथापि तस्यावसतो महागिरो —(l 2) Ś1 D12 [अ]थ ता, D3 11 हिनां (for हृता) —(l 3) Ñ B1–3 D7 जलभारवाहिना(Ñ1 °सिनो), V2 जलदा प्रभातु, B4 जलदा प्रभास्वरा, D1 जलचारिवासनो (sic) (for जलदा महाजवा) —(l 4) D3 प्रवृत्वन (corrupt), D11 निवेद्य ता (for निवेद्य च) Ñ2 B1–3 D7 घना निवृत्ता शरद न्यवेदयन्, V2 वानिवृत्ता शरदि न्यवेदयन्, B4 जलानिवृत्ता शरद न्यवारयन् (sic), D1 घना निवृत्ता शरद निवेद्य ता ]

Colophon T1 damaged —*Sarga name* Ś1 Ñ2 V1 2 B D1–4 7 11–13 प्रावृड्वर्णन(B3 4 °ना, D1 3 13 °न), Ñ1 वर्षावर्णन —*Sarga no* (figures, words or both) Ś1 Ñ1 V1 B1 D2 4 12 om, Ñ2 V2 B2 G3 27 (as in text), B3 4 D3 5–10 T2 3 G1 2 M 28, D1 18, D11 24, D13 26 —After colophon, G1.3 conclude with श्रीरामाय नम, G2 with श्रीरामचन्द्राय नम

# २८

समीक्ष्य विमलं व्योम गतविद्युद्बलाहकम् ।
सारसारवसंघुष्टं रम्यज्योत्स्नानुलेपनम् ॥ १
समृद्धार्थं च सुग्रीवं मन्दधर्मार्थसंग्रहम् ।
अत्यर्थमसतां मार्गमेकान्तगतमानसम् ॥ २
निवृत्तकार्यं सिद्धार्थं प्रमदाभिरतं सदा ।
प्राप्तवन्तमभिप्रेतान्सर्वानेव मनोरथान् ॥ ३
स्वां च पत्नीमभिप्रेतां तारां चापि समीप्सिताम् ।
विहरन्तमहोरात्रं कृतार्थं विगतज्वरम् ॥ ४
क्रीडन्तमिव देवेशं नन्दनेऽप्सरसां गणैः ।
मन्त्रिषु न्यस्तकार्यं च मन्त्रिणामनवेक्षकम् ॥ ५

G 4 28 5
B 4 29 5
L 4 22 0

## 28

☞ V3 illeg for Sarga 28 (cf v l 4 27 34) M1 begins with श्रीरामाय नम

1 Ś1 Ñ V1 2 B D1 2 4 7 12 13 om 1 T1 damaged up to रम्य in $1^{d}$ —$^{c}$) D5 6 8–10 G2 3 M1 2 सारसाकुल (M1 °रस)- —$^{d}$) D3 5 6 9 11 G1 2 रम्यं (for रम्य-)

2 $^{a}$) Ś1 D4 12 समीक्ष्यमाण, Ñ1 D1 2 13 समीक्ष्य राम, Ñ2 V1 2 B D7 समीक्ष्य कामात्, D3 11 कामात्मान च (for समृद्धार्थं च) —$^{b}$) Ś1 D1–4 12 13 त्यक्त- (for मन्द-) V1 -सग्रहे, D1 -सहित (for सग्रहम्) Ñ2 V2 B D7 असुहृद्धर्मसग्रह, G(ed) मद धर्मार्थसग्रहे —$^{c}$) D8 10 G1 चासता, D9 वासता, Cg k.t as in text (for असता) Ś1 Ñ1 D1 2 4 12 13 अत्य(D1 °न्व)र्थावहितात्मानम्, Ñ2 V1 2 B D7 रत्यर्थेव(V2 B4 D7 °र्थे र, B1 °र्थे वि) हितात्मान, D3 11 रत्यर्थं(D11 °र्थं) समवेतत्वाद्, D5 6 अतीत्य च सता मार्गम् —$^{d}$) Ñ2 B1 3 4 D7 कातास्वेकात, V1 2 काताया गत-, B2 कातासक्त- (for एकान्तगत-) ❀ Cr एकान्तगतमानस एकस्मिन् कामपुरुषार्थे अन्त निश्चय गत मानस मन यस्य स तथोक्त । तम् ।, Cg एकान्तगतमानस एकस्मिन् कामपुरुषार्थे अन्त निश्चय गत मानस यस्य तथोक्तम् । यद्वा असता कामुकाना मार्गमेकान्तगतमत्यन्तगत मानस यस्य स तथा । 'तीव्रैकान्तनितान्तानि' इत्यमर ❀ —After 2, D3 ins

552* समीक्ष्यमाण सुग्रीव सत्यधर्मार्थसौहृदम् ।
अन्यथावाक्यतात्मानमेकान्तगतमानसम् ।
[(l 2) Post half = $2^{d}$ ]

3 D1 om 3 —$^{a}$) T1 Cm g निर्वृत्त-, Cv r k t as in text (for निवृत्त-) —$^{b}$) G3 -सहित (for -[अ]भिरतं). G2 तदा (for सदा) —For $3^{ab}$, Ś1 Ñ V1 2 B D2–4 7 11 13 subst

553* निवृत्तार्थमभिप्रायैरिष्टैर्भ्रात्रा वित्रासितम् ।
[Ñ2 B D7 निवृत्ताश(B2 3 °वृत्तास, B4 °हताश)मभिप्रायैर्, V1 2 निवृत्ति समनुप्राप्तम् (for the prior half) D7 कृष्टैर् (sic) (for इष्टैर्) B1 भर्त्रा, D11 भ्रात् (for भ्रात्रा)]

—T1 damaged from $3^{c}$ up to $4^{b}$ Ñ1 illeg from $^{c}$ up to मनो in $^{d}$ —$^{c}$) D11 प्राप्तवतम् (for प्राप्त°) Ś1 Ñ2 V1 2 B D2 4 7 12 13 अभिप्रायान्(Ś1 D2 4 12 13 °य), D3 अभिप्रेत (for अभिप्रेतान्) —$^{d}$) Ś1 D2–4 12 13 सर्वम् (for सर्वान्) Ś1 Ñ D2–4 12 13 मनो(Ñ1 illeg)गत(Ñ2 °तान्), V1 2 B1–3 मनोनु(B3 °र्थे)गान्, B4 मनोरमान् D7 सर्वानितानागतान्हि

4 T1 damaged for $4^{ab}$ (cf v l 3) —$^{a}$) Ñ1 illeg for मभिप्रेता —$^{b}$) G3 [ए]व, M2 Cv [अ]भि-; Cr m as in text (for [अ]पि) Ś1 D1–4 11–13 मनसे(Ś1 D12 °सी)प्सिता, Ñ2 V1 2 B D7 परमे(V1 मपरे [meta])-प्सिता, M1 समभीप्सतीं (for [अ]पि समी°) Ñ1 राज्य चापि वनौकसा —After $4^{ab}$, Ś1 Ñ1 D2 4 12 13 ins

554* सुखेन राजपुत्र्या च बुद्ध्वा रतिपरायणम् ।
[D2 राजपुत्र्याश्, L(ed) राजपत्न्या Ñ1 सर्वं समीहित तच (for the prior half)],

while Ñ2 V1 2 B D7 ins

555* सहस्त्र राजपत्नीना लब्ध्वा कामपरायणम् ।
[V1 -परायण, D7 -परायणा],

whereas D1 3 11 ins

556* स महाराजपत्नीं च लब्ध्वा रतिपरायणाम् ।
[D1 ता महा-, D11 कपीश- (for स महा-) D11 कामपरायण]

—Ś1 D12 om $4^{c}$–5

5 Ś1 D12 om 5 (cf v l 4) —$^{a}$) M1 देवेंद्र (for देवेश) Ñ1 D1–4 11 13 मरुद्गणै शक्र(D11 °णैर्देव)मिव, Ñ2 V1 2 B D7 मरुत्पति शक्रमिव —$^{b}$) D5 8–10 गधर्व- (for नन्दने) Ñ2 V1 2 B D3 7 11 नदने साप्सरोगण(D3 11 °णै), D2 4 न तदेवाप्सरोगण, D13 ततो देवाप्सरोगणान् —$^{c}$) D9 व्यस्तकार्यं च, D11 न्यस्तकार्यार्थं, T1 न्यस्तराज्य च (for न्यस्तकार्यं च) Ñ V1 2 B D1–4 7 13 मन्त्रिसन्यस्त(D1 °त्यस्व [sic])कार्या(Ñ2 D7 राज्या)र्थं(D2 र्था) —$^{d}$) D1–4 6 13 T3 G2 3 M3 मत्राणाम्, M1 मित्राणाम्, Cg as in text (for मन्त्रिणाम्) Ñ1 V2 B2–4 D2–4 6 11 13 T2 अनवे(B3 °पे)क्षित(V2 D2–4 13 क्षण, B2 D11 क्षिण, D6 क्षिक), Ñ2 V1 B1 D7 G2 अनपेक्षिण(G2 °क्षक), D1 अनिवेक्षण, Cg as in text (for अनवेक्षकम्) —After 5, D3 11 ins

557* कुलजा राज(D3 °ज्य)लक्ष्मीं च लब्ध्वा रतिपरायणम् ।

5 6 4 उत्सन्नराज्यसंदेशं कामवृत्तमवस्थितम् ।
निश्चितार्थोऽर्थतत्त्वज्ञः कालधर्मविशेषवित् ॥ ६
प्रसाद्य वाक्यैर्मधुरैर्हेतुमद्भिर्मनोरमैः ।
वाक्यविद्वाक्यतत्त्वज्ञं हरीशं मारुतात्मजः ॥ ७
हितं तथ्यं च पथ्यं च सामधर्मार्थनीतिमत् ।
प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयम् ।
हरीश्वरमुपागम्य हनुमान्वाक्यमब्रवीत् ॥ ८

राज्यं प्राप्तं यशश्चैव कौली श्रीरभिवर्धिता ।
मित्राणां संग्रहः शेषस्तद्भवान्कर्तुमर्हति ॥ ९
यो हि मित्रेषु कालज्ञः सततं साधु वर्तते ।
तस्य राज्यं च कीर्तिश्च प्रतापश्चाभिवर्धते ॥ १०
यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिप ।
समवेतानि सर्वाणि स राज्यं महदश्नुते ॥ ११

6 a) G3 M2 उत्पन्न-, Cm as in text (for उत्सन्न-) T1 -राज- (for -राज्य-) G M Cm -सदेह (for -सदेशं) D5 8-10 Ct उच्छिन्नराज्यसदेह, Cg as in text —b) D1 इव स्थित —For 6ab, Ś1 Ñ V1 2 B D1-4 7 11-13 subst

558* राज्यस्थ सुगसदोहे वर्तमानमुपस्थितम् ।

[ Ś1 D12 राज्यार्थ (for °स्थ) D2 4 13 ग्रु( D4 कृ )तमदेह, D3 °समोहे (for सगसदोहे) D11 अल्पवनुषभोगेषु (for the prior half) V1 2 B उपस्थिते, D3 सुमस्थित, D11 अवस्थित (for °स्थितम्) ]

—Then Ś1 D2 4 12 13 cont ·

559* स्वयमेव विनिश्चित्य ज्ञात्वा कालमुपस्थितम् ।

—T1 damaged for 6c-7c —c) Ñ1 -कालज्ञ (for -तत्त्वज्ञ ) Ś1 D2 4 12 13 विनिश्चितार्थ( D12 °र्थे· )कालज्ञ , D1 निश्चितार्थोथ कालज्ञ , D3 विनिश्चित्यार्थतत्त्वज्ञ —d) Ś1 Ñ V1 2 B D3 7 12 13 कार्यकाल-, D1 काले काल-, D2 कार्याकार्य- (for कालधर्म-) D4 कर्मण कार्यकालवित्

7 T1 damaged up to c (cf v l 6) —a) B1 D1 11 T3 G1 प्रसाद- (for °द्य ) Ś1 Ñ1 D1-6 8-10 12 13 विविधैर् (for मधुरैर्) Ñ2 V1 2 B1-3 D7 मधुरैर्वाक्यैर् (by transp ), B4 विविधैर्वाक्यैर् —b) D6 मनोहरै , D11 G1 मनोनुगै· (for °रमै ) Ś1 Ñ1 D1-4 12 13 शाखामृगपतेर्मन , Ñ2 V1 2 B D7 हरीणा मानयन्पति —c) Ś1 Ñ V1 D2 4 6 7 12 M1 -तत्त्वज्ञ. —d) Ś1 Ñ V1 2 B D1-4 7 12 13 सुग्रीव (for हरीश )

8 a) G2 3 M3 Cg तत्त्व, Ct as in text (for तथ्य ) D1 om (hapl ) पथ्य च D9 10 Ct transp तथ्य and पथ्य Ñ2 D7 हित पथ्य यशस्य च —b) G1 -दानार्थ (for -धर्मार्थ-) D5 -नीतिमान , D11 -हेतुभि , T2 नीतिवत् (for -नीतिमत्) Ś1 Ñ V1 2 B D1-4 7 12 13 धर्मकामा( D1 °र्था )र्थहेतुमत्( V1 D3 °हेतुभि , D4 °मुत्तम, D13 °हेतुमान् ) —c) Ś1 D1 2 7 11-13 प्रणयात् , B4 प्रणत (for प्रणय-) D5 -प्रिय , D7 11 नीति- (for -प्रीति-) —d) Ś1 Ñ2 V1 2 B D4 7 11-13 -निश्चय (for °यम् ) —e) V2 B1-3 D7 उपागम्य (for °गम्य ) —f) Ñ V1 2 B D2 5 7 8 10-13 G M1 2 हनूमान् (for हनु° )

9 a) Ñ2 V3 B1 3 D7 राजन् (for प्राप्त) Ś1 Ñ M3 प्राप्त राज्य (by transp ), Cg t राज्य प्राप्त (as in text) Ś1 Ñ1 V1 D1-4 11-13 स्फीत, Ñ2 B1 3 D7 दिव्य, V2 B2 दीप्त (for चैव ) B4 राज्य त्वया परिप्राप्त —b) D5 कौलीन (hypm ), D9 काला (sic), T2 कामिन् , T3 पौर-, Cg k t as in text (for कौली ). Ś1 Ñ1 V1 D2 4 12 13 बलात्ता( Ñ1 कालाच्छ्री, V1 कालश्री, D2 4 13 बलाच्छ्री )रामसमाहृता, Ñ2 V2 B1-3 D1 3 7 कौली श्रीरात्मसमा( D3 °स )हृता, B4 D11 कौली श्री परिवर्धि( D11 °रक्षि )ता, D6 G3 कौली श्रीरपि वर्धिता —After 9ab, Ś1 Ñ V1 2 B D1-4 7 11-13 ins

560* स्वजन पूजित सम्यक्प्रकृतीश्चानुरञ्जिता· ।
शत्रवस्ते प्रतापेन नाममात्रावशेषिता. ।

[ (l 1) Ñ2 V1 2 B1-3 D7 रञ्जिताश्च( V2 सुरञ्जिता) प्रकृतय (for the prior half) Ñ2 B2 D7 स्व( B2 सु )जन परिपूरि( D7 °जि )त , V1 B1 3 स्वजना प्रतिपूजिता , V2 सुजनश्च प्रपूजित , B4 D11 प्रकृतिश्चानुरञ्जिता, D13 प्रकृतीश्चानुरञ्जित (for the post half) —(l 2) B2 [ऽ]स्य (for ते) V1 मान (for नाम ) B1 -शेष- (for -मात्र ) ]

—c) D6 चित्राणा (sic), D7 11 मन्त्रिणा (for मित्राणा) B4 चैव (for शेषस् ) Ś1 Ñ1 D1-4 11-13 चैव( D1 3 11 कार्य, D2 चेप, D13 क्षित[sic] ) समयस् (for सग्रह शेषस् ) —d) T1 3 M3 त (for तद् ) D9 G1 M2 (before corr as in text, after corr sec m ) 3 अर्हसि (for °ति ) Ñ1 B4 D1 2 4 13 अनुमन्यता, Ñ2 V1 2 B1-3 D3 7 अनु( D3 °व )त्तु( B3 °यु )द्यता, D11 अनुमोदता (for कर्तुमर्हति ) Ś1 D12 तदुद्धया चानु( D12 नतु )मन्यता.

10 a) Ś1 Ñ V1 2 B D3 4 7 12 मित्रज्ञ , D2 मत्रज्ञ , D13 मेत्रिज्ञ (for कालज्ञ ) D1 तथा हि मित्रे मित्रज्ञ —b) Ś1 D2 4 12 13 चानुवर्तते (for साधु व° ) —d) Ś1 Ñ1 V1 D2-4 12 13 प्रभावश्च (for प्रतापश्च) V2 [ए]व वर्धते, B2 D8-10 G3 [अ]पि वर्ध( G3 °र्त )ते, D2 4 13 [अ]तिवर्तते, D7 प्रवर्धते (for [अ]भिवर्धते )

11 a) D1 यश्च (for यस्य ) Ś1 Ñ2 V1 2 B D1-4 7 11-13 दण्डश्च कोशश्च (by transp ), Ñ1 मित्र च कोशश्च —b) V2 मित्र च (for मित्राणि) Ś1 D1 3 पुर( Ś1 °री ) जन , Ñ1 B2 D4 स( B2 च ) भूमिप·, D6 T2 च भूरपि, D11 च भूस्तथा,

तद्भवान्वृत्तसम्पन्नः स्थितः पथि निरत्यये ।
मित्रार्थमभिनीतार्थं यथावत्कर्तुमर्हति ॥ १२
यस्तु कालव्यतीतेषु मित्रकार्येषु वर्तते ।
स कृत्वा महतोऽप्यर्थान्न मित्रार्थेन युज्यते ॥ १३
क्रियतां राघवस्यैतद्वैदेह्याः परिमार्गणम् ।
तदिदं वीर कार्यं ते कालातीतमरिंदम ॥ १४
न च कालमतीतं ते निवेदयति कालवित् ।
त्वरमाणोऽपि सन्प्राज्ञस्तव राजन्वशानुगः ॥ १५ G 4 28 17 B 4 29 16 L 4 22 16

D12 पुरे न, D13 स भूपति (for च भूमिप) D2 मित्राणा सोद्य भूमिप —c) Ś1 D2 4 12 13 पूर्णान्येतानि, Ñ2 G1 समरे तानि, D1 राज्य दुर्गश्च, D3 राष्ट्र दुर्गाणि, D5 सममेतानि, D8–10 Ct समान्येतानि, Cm g k as in text (for समवेतानि) Ñ1 यस्येति, D2 13 राजेन्द्र (for सर्वाणि) ❀ Ct समवेतानि इति पाठे मिलितानीत्यर्थ ❀ —d) Ś1 Ñ1 D1 3 11 12 राज्यफलम्, Ñ2 V1 2 B4 D7 राजा (V2 °ज्ञा, B4 °ज) श्रि (D7 प्रि) यम्, B2 (orig as in Ñ2, *sup lin* also) राजा सुखम् (for राज्य महद्) B1 3 स राजा सुखमेधते, D2 4 13 राज्यस्य फलमश्नुते

**12** D3 om 12 —a) G (ed) स (for तद्) Ś1 Ñ1 D1 4 12 13 मित्र-, V2 वृत्ति-, B4 धूर्त- (sic), D2 मन्त्र- (for वृत्त-) —c) Ñ1 D1 उपनीतश्च (D1 °य त्व), D5 अभिनीतार्थे, G (ed) अभिनीतस्त्व (for अभिनीतार्थं). Ś1 D2 4 12 13 मित्राणामुपनीतस्त्व (D2 °नीयस्व [sic], D4 °नीयस्व, D13 °जीव्यश्च) —d) V2 वक्तुम् (for कर्तुम्) Ś1 Ñ V1 2 B1 3 D1 2 4 7 9 11–13 G1 अर्हसि (for °ति) —After 12, D5 6 8–10 S ins

561* सत्यज्य सर्वकार्याणि मित्रार्थे योऽनुवर्तते ।
सम्भ्रमाद्विकृतोत्साह सोऽनर्थैर्नावरुध्यते ।

[ (l 1) D5 6 8 10 G3 M1 2 Cg सर्वकर्माणि, D9 कर्मसर्वाणि (sic) (for सर्वकार्याणि) D6 G2 3 मित्रार्थ D5 [ऽ]भिवर्तते, D8 10 न वर्तते (for ऽनुवर्तते) —(l 2) G2 3 Cg M हि, Ct as above (for वि-) G1 सम्भ्रमार्थेकृतोत्साह (for the prior half) D8–10 T1 3 G1 सोनर्थेनावरुध्यते (for the post half) ]

—After 12, D11 ins 562*

**13** a) Ñ2 V1 2 B D7 10 हि (for तु) B4 कालव्यनीतेषु, G1 कालप्रतीतेषु (for कालव्य°) Ś1 D12 यो हि कालोपनीतेषु, D2 13 यो हि कालाद्व्यतीते तु, D4 यो हि कालाद्यतीतेषु —b) D2 मित्रकार्ये तु वर्तते, D13 °कार्येनुवर्तते —cd) Ś1 D2 4 8 10 12 13 M1 न मित्रार्थेषु (D8 10 °र्थे हि), B2 अमित्रार्थेषु न (hypm), T2 G अमित्रार्थे न, Ct as in text (for न मित्रार्थेन) V1 D11 कृतं (D11 °त्वा) महातमप्यर्थं न मित्रार्थ (D11 °र्थममित्रार्थे) प्रयुज्यते —Ñ1 D1 3 subst for 13, while Ś1 Ñ2 V1 2 B D2 4 7 12 13 ins after 13, D11 ins after 12

562* मनसापि हि कार्यार्थं य काले प्रतिपद्यते ।
स राजा बुद्धिसम्पन्न परेषा मूर्ध्नि वर्तते ।

[ (l 1) Ñ2 V1 2 B2 D7 कर्माणि, B1 3 य कर्म, B4 कार्याणि (for कार्यार्थं) Ñ1 यत, D13 क (for य) D13 (with hiatus) उपपद्यते (for प्रति°) B1 3 काले सप्रतिपद्यते (for the post half) —(l 2) Ñ1 मूर्ध्नि सर्वपा (for बुद्धिसम्पन्न) B4 D3 सर्वेषा (for परेषा) Ñ1 ++ परिवर्तते (illeg), D1 सर्वेषा मूर्धनि स्थित (for the post half) ]

—Thereafter D11 cont

563* सम्भ्रमाद्विकृतोत्साहमर्थिन यो रुणद्धि च ।
स हि कालाभिपन्नेषु मित्रकार्येषु वर्तते ।

—After 13, D6 T G1 2 M2 3 ins

564* यदिदं वीर कार्यं नो मित्रकार्यमरिंदम ।

**14** Ñ1 D1 om $14^{ab}$ Ś1 D2 4 12 13 read $14^{ab}$ after $17^{ab}$ Ñ2 V1 2 B D3 5 7–11 G3 M1 transp $^{ab}$ and $^{cd}$ D6 G1 M2 read $14^{ab}$ after $15^{ab}$ G2 reads $14^{ab}$ after 15 —a) Ś1 D2–4 12 13 राघवस्य प्रतिश्रुत्य, Ñ2 V1 2 B D7 11 रामस्य रण (V2 बल) विक्रात (B2–4 D7 °त) —b) Ś1 प्रतिमार्गेण (for परि°) —c) Ñ2 यदि त्व, D5 8–10 G3 Ck यदिद, D7 यत्त्विद, Cv r as in text (for तदिद) Ś1 Ñ V1 2 B D1–5 7–13 मित्र- (for वीर) Ś1 Ñ1 D1–4 12 13 त्व, D5 8–10 G3 नो, Cv r m g as in text (for ते) —d) D11 कालनीतम्, G3 मित्रकार्यम् (for कालातीतम्) Ś1 Ñ1 D1–4 12 13 कर्तुमर्हस्यरिंदम (D13 °म) ❀ Cv यदिद वीरकार्यं नौ मित्रकार्यमरिंदमेतीवादे (°ति पाठे ?) यदि न कर्तव्यम्। "तदिद वीरकार्यं ते कालातीतमरिंदम। न च कालमतीत ते निवेदयति कालवित्"। इत्येष पाठक्रम।, Cr यदिद वीरकार्यं ते मित्रकार्यमरिंदम। न च कालमतीत ते निवेदयति कालविदितिक्रम।, Cm यदिदमिति। वीर अरिंदम न कार्यमस्माभि कर्तव्यम्, यदिद मित्रकार्यमस्ति तदिद वीरकार्यं रामकार्यम्, अरिंदम! ते कालातीत युक्तकालमतिक्रम्य वर्तत इत्यर्थ। अस्मिन्श्लोके अरिंदमेति द्विरुक्ति श्रीमध्यगतेन सुग्रीवेण हर्षपुर सर स्वोक्तमङ्गीकारयितुमिति वेदितव्यम् ❀ —After 14, Ś1 D12 read $24^{cd}$

**15** a) V2 B2 4 स, D11 त (for न) Ñ2 V1 2 B D1 7 त्वा, D3 om (for ते) Ś1 Ñ1 D2 4 12 अतीतत्वान् (for अतीत ते) D13 न च कालपरीतत्वान् —b) V2 B4 न चोदयति (for निवेदयति) Ś1 Ñ1 D1–4 12 13 नो (D3 चो) दयाम्यद्य धर्मत, Ñ2 सद्यो ध्यायति धर्मवित्, V1 अचोदयति तत्त्ववित्, B1–3 D7 सचोद (D7 °चोध) यति धर्मवित् —After $15^{ab}$, D6 G1 M2 read $14^{ab}$ —c) Ñ2 V1 B1 D5 8 10 11 Ct स (for सन्) L (ed) त्वरमाणो ह्यनुप्रासस् Ś1 Ñ1 D2 4 12 13 त्वरमाणमनु (D2 °ति) प्राप्त, D1 त्वरमाणेन सप्राप्त, D3 त्वरमाणोप्यसम्भ्रान्त —d) Ñ1 D1 तथा

